(टिप्पणी)

## द्वित्रा शब्दाः

इयं वरदराजाचार्यकृता वैयाकरणसारसिद्धान्तकौमुदी। चान्द्रव्याकरणस्य प्रक्रियात्मकताया लोकप्रियतामवेक्ष्य पाणिनीयव्याकरणेऽपि प्रक्रियापद्धति-समावेशार्थं पाणिनीयैरपि प्रक्रमः कृतः। क्रमेऽस्मिन् धर्मकीर्तेः रूपावतारः समुपलब्धग्रन्थेषु आदिमत्वेन गृह्यते। क्रमेऽस्मिन् विमलाचार्यस्य रूपमालाऽपि प्रसिद्धा। ततश्च तत्साफल्येन प्रेरितेन रामचन्द्रविदुषा प्रक्रियाकौमुदी प्रणीता। अत्रापि अष्टाध्याय्याः कतिपयान्येव सूत्राणि सङ्कलितान्यासन्। ततश्च भट्टोजिदीक्षितेन प्रायः सर्वाण्येव सूत्राण्यादाय यथासम्भवमष्टाध्यायीक्रमश्च समादृत्य सर्वाङ्गपूर्णा वैयाकरणसिद्धान्तकौमुदी प्रणीता। ग्रन्थस्यास्य वैलक्षण्येन तिरोभाविता इतरे प्रक्रियाग्रन्थाः। ज्ञानेन्द्रसरस्वतिप्रभृतिभिरनेकैर्विचक्षणै-र्बहुधा व्याख्यातोऽयं ग्रन्थो लोकप्रियताया पराकाष्ठामुपगतः। ग्रन्थोऽयं बहुभिः समादृतः प्रौढमतिगम्य इति मध्यममतीनां कृते तत एव विषयमादाय तयैव प्रक्रियया भट्टोजिशिष्येण वरदराजाचार्येण मध्यसिद्धान्तकौमुदी प्रणीता। तत्र स कथयति—

> नत्वा वरदराजः श्रीगुरून् भट्टोजिदीक्षितान्।
> करोति पाणिनीयानां मध्यसिद्धान्तकौमुदीम्॥

अन्ते च—

> एषा वरदराजेन बालानामुपकारिका।
> अकारि पाणिनीयानां मध्यसिद्धान्तकौमुदी॥
> कृतिर्वरदराजस्य मध्यसिद्धान्तकौमुदी।
> तस्याः सङ्ख्या तु विज्ञेया खबाणकरवह्निभिः॥ (३२५०)

ग्रन्थोऽयं शङ्काग्रन्थातिरिक्तविषये सर्वाङ्गपूर्ण एव। ततश्च तेनैवाचार्येण पाणिनीयशास्त्रप्रविविक्षूणां कृते तामपि सङ्क्षिप्य लघुसिद्धान्तकौमुदी प्रणीता यत्र स एव कथयति—

> नत्वा सरस्वतीं देवीं शुद्धां गुण्यां करोम्यहम्।
> पाणिनीयप्रवेशाय लघुसिद्धान्तकौमुदीम्॥

अन्ते च—

शास्त्रान्तरे प्रविष्टानां बालानाञ्चोपकारिका ।
कृता वरदराजेन लघुसिद्धान्तकौमुदी ॥ इति ।

लघुकायोऽपि ग्रन्थोऽयं प्रस्तुतविषयदृष्ट्या पूर्ण एव। अयं हि सर्वत्र सादरं पठ्यते पाठ्यते च। तत्रापि बालानां सुकुमारमतीनां शास्त्रे प्रवेशसौकर्याय तेनैवाचार्येण तामपि सङ्क्षिप्य सारसिद्धान्तकौमुदी प्रणीता यत्र स एव कथयति—

नत्वा वरदराजः श्रीपाणिन्यादिमुनित्रयम् ।
करोति बालबोधाय सारसिद्धान्तकौमुदीम् ॥

अन्ते च—

कृता वरदराजेन दुर्गातनयसूनुना ।
वेदवेदप्रवेशाय सारसिद्धान्तकौमुदी ॥
सर्वशास्त्रप्रवेशाय सार्धसप्तशती कृता ।
सुखेन बालबोधाय तेन तुष्यतु शङ्करः ॥ इति ।

इत्थं हि पाणिनीयाष्टाध्याय्यां माहेश्वरसूत्रातिरिक्तं ३९९६ सूत्राणि सन्तीति स्मर्यते। तेषु ५८४ सूत्राण्येव विमलाचार्येण सङ्गृहीतानि। रामचन्द्रेण प्रक्रियाकौमुद्यां ११३४ सूत्राणि सङ्कलितानि प्रक्रियार्थम्। ततश्च भट्टोजिना ३९७८ सूत्राणि गृहीतानि सिद्धान्तकौमुद्याम्। मध्यसिद्धान्तकौमुद्यां हि ३२५० सूत्राणि सङ्कलितानि, वरदराजेन लघुसिद्धान्तकौमुद्यां हि १२८२ सूत्राणि व्याख्यातानि। सारसिद्धान्तकौमुद्यां तु ७५० सूत्राणि व्याख्यातानीति तत्पुष्पिकावाक्यतो ज्ञायते यथोच्यते सार्धसप्तशती कृतेति। किन्तु समुपलब्धसंस्करणे तु ६७२ सूत्राण्येव व्याख्यातानि दृश्यन्ते दृश्यन्ते च कतिपयसूत्राणि तु वृत्तावेवोपन्यस्तान्यपि ।

सारसिद्धान्तकौमुदी हि पठनपाठनप्रक्रियायामुपकर्त्र्यपि न तथा प्रसिद्धाऽऽसीच्छात्रवर्गे। यदाऽसौ पाठ्यपुस्तकत्वेन स्वीकृता ततः प्रभृत्यस्याः प्रसिद्धिरुपयोगिता च सर्वैरनुभूता । पाठनावसरे छात्रैरनुभूतमसमायोजनञ्च हृदि सम्प्रधार्य तेषामेवानुरोधेन तदानुकूल्यं शास्त्रमर्यादाञ्चोभयपक्षमेवादाय व्याख्यातोऽस्त्ययं ग्रन्थो मया। यथोक्तं प्रारम्भवाक्ये—

धर्मकीर्तिसमारब्धा रामचन्द्रविकासिता ।
भट्टोजिं प्राप्य या विज्ञं प्रक्रिया पूर्णतां गता ॥

सा मध्यलघुरूपेण पूर्वं सङ्गृह्य यत्नतः ।
कृता वरदराजेन सारसिद्धान्तकौमुदी ।।
सैव व्याख्यायते छात्रज्ञानसौकर्यदृष्टितः ।
अनेन प्रीयतामीशो देवः प्रथमशाब्दिकः ।। इति ।

व्याख्यायामस्यां सन्ति चत्वारः स्तम्भाः—सूत्रव्याख्यानं, वृत्तिव्याख्यानम्, उदाहरणव्याख्यानं वृत्त्युदाहरणानुवादश्चेति । सूत्रव्याख्यानावसरे पदच्छेदः, पदार्थोक्तिः, आवश्यकस्थले विग्रहः, अन्वयः, अनुवृत्तिः परिचयश्चेत्येते सङ्क्षेपेणोपस्थापिताः । वृत्तिव्याख्यानाय पदार्थोक्तिरेव प्रायोऽनुसृता । उदाहरणव्याख्यानाय प्रक्रियोक्तिः समाश्रिता । तत्र संयोजितानि च कतिपयसूत्राणि यथाऽऽवश्यकं सङ्ख्यापूरणदृष्टया । चतुर्थस्तम्भे तु सूत्रवृत्त्युदाहरणानां हिन्दीभाषायामनुवाद एव सङ्क्षेपेण । तदित्थमत्र मूले व्याख्याने चेति सङ्कलनया पुष्पिकावाक्यानुसारेण सार्धसप्तशती व्याख्याता । व्याख्याने चास्य प्राधान्येन वासुदेवदीक्षितस्य बालमनोरमा, ज्ञानेन्द्रसरस्वतेस्तत्त्वबोधिनी, श्रीकृष्णस्य प्रकाशः, हरदत्तस्य पदमञ्जरी, जिनेन्द्रबुद्धेर्न्यास इत्येते व्याख्याग्रन्था बहुशः प्रयुक्ताः । तान् प्रत्यहं सादरं कृताञ्जलिराभारव्यक्तये ।

अन्ते च—प्रमादादनवधानाद्वाऽज्ञानादेव वा या हि त्रुटयोऽत्र सन्ति तदर्थं क्षमाप्रार्थी मन्दोऽपि व्याख्यातृयशःप्रार्थ्यहम् । इदमपि च—

ये नाम केचिदिह नः प्रथयन्त्यवज्ञाम् ।
जानन्तु ते हि खलु तान्प्रति नैष यत्नः ।।
यत्नस्त्वयं खलु कृतेऽल्पधियां जनानाम् ।
शब्दानुशासनसमुत्सुकमानसानाम् ।। इति ।

काशी
पौषी अन्वष्टका
२०४९ वै०

विनयावनतः
**लोकमणिदाहालः**
नेपालाभिजनः

# सूत्रानुक्रमणिका

॥ श्रीः ॥

श्रीमद्वरदराजाचार्यकृता

# सारसिद्धान्तकौमुदी

## आचार्यलोकमणिकृत-'राका'-संस्कृत-हिन्दीव्याख्योपेता

नत्वा वरदराजः श्रीपाणिन्यादिमुनित्रयम् ।
करोति बालबोधाय सारसिद्धान्तकौमुदीम् ॥

---

ध्यात्वा महान्तञ्च गुरुं नत्वा लोकमणिर्द्विजः ।
तन्वे वरदराजस्य सारसिद्धान्तकौमुदीम् ॥ १ ॥
धर्मकीर्तिसमारब्धा रामचन्द्रविकासिता ।
भट्टोजिं प्राप्य या विज्ञं प्रक्रिया पूर्णतां गता ॥
सा मध्यलघुरूपेण पूर्वं सङ्गृह्य यत्नतः ।
कृता वरदराजेन सङ्क्षिप्ता सारकौमुदी ॥
सैव व्याख्यायते छात्रज्ञानसौकर्यदृष्टितः ।
अनेन प्रीयतामीशो देवः प्रथमशाब्दिकः ॥ २-४ ॥

अथ तत्रभवान् भट्टोजिशिष्यो वरदराजाचार्यः प्रारिप्सितस्य सारसिद्धान्तकौमुद्याख्यग्रन्थस्य निर्विघ्नपरिसमाप्त्यर्थं ग्रन्थादौ कृतनमस्काररूपं मङ्गलं शिष्यशिक्षायै निबध्नन् तत्राध्येतृप्रवृत्तयेऽनुबन्धचतुष्टयनिरूपणञ्च करोति—**नत्वेत्यादिना**। वरदराजः श्रीपाणिन्यादिमुनित्रयं नत्वा बालबोधाय सारसिद्धान्तकौमुदीं करोति इत्यन्वयः ।

वरदराजः = तदाख्यविचक्षणः । श्रीपाणिन्यादिमुनित्रयं—त्रयोऽवयवाः अस्येति त्रयं श्रीयुता = मङ्गलमूर्तयो ये पाणिन्यादिमुनयः—पाणिनिः = तदाख्यो व्याकरणसूत्रकृत्, आदिः = प्रथमो येषान्ते तादृशा ये मुनयः = ऋषयः, वार्तिक-

---

वरदराज नामक मैं श्रीपाणिनि आदि तीन मुनियों ( पाणिनि, कात्यायन एवं पतञ्जलि ) को नमस्कार कर व्याकरण जानने के लिए इच्छुक बालकों को आसानी से ही ज्ञान कराने के उद्देश्य से ( वैयाकरणसिद्धान्तकौमुदी का

## अथ संज्ञाप्रकरणम्

अइउण् १। ऋऌक् २। एओङ् ३। ऐऔच् ४। हयवरट् ५। लण् ६। ञमङणनम् ७। झभञ् ८। घढधष् ९। जबगडदश् १०।

---

कृत्कात्यायनो महाभाष्यकृत्पतञ्जलिश्च श्रीपाणिन्यादिमुनयः, तेषां त्रयं=पाणिनिकात्यायनपतञ्जलिसंज्ञकमुनीनिति। नत्वा=अभिवन्द्य प्राणामादिना तोषयित्वा। बालबोधाय—बालानाम्=अज्ञातव्याकरणशास्त्राणामध्येतॄणां, बोधाय=सुखेन ज्ञानाय। सारसिद्धान्तकौमुदीम्—सारा=साररूपा सङ्क्षिप्तेति चासौ सिद्धान्तानां=वैयाकरणविषयाणां, कौमुदी=प्रकाशिका ज्योत्स्ना, तां=वैयाकरणसिद्धान्तकौमुद्याः सारभूतग्रन्थमिति। करोति=विदधाति सङ्गृह्णातीति। विनयप्रदर्शनाय प्रथमपुरुषप्रयोगः। अत्र हि वैयाकरणसिद्धान्ताः प्रतिपाद्यत्वेन विषयाः अनायासेन तदवगमः प्रयोजनं तस्य ग्रन्थस्य च जन्यजनकभावः सम्बन्धः वैयाकरणसिद्धान्तजिज्ञासुरधिकारीति।

अथ वैयाकरणसिद्धान्तमूलभूतानि चतुर्दशसूत्राणि पठति--**अइउणित्यादिना**। **अइउण्**=अश्च इश्च उश्च ण् च तेषां समाहारः। अ-इ-उ इत्येते वर्णाः णकारः अण्संज्ञार्थः प्रयोजनञ्च अण् इत्युक्ते अइउ इत्येते वा ग्रहणम्, तच्च लाघवार्थम्। एवमग्रेऽपि यथा **ऋऌक्**—ऋश्च ऌश्च क् च तेषां समाहारः ऋऌ इत्येतौ वर्णौ ककारः अक्-इक्-उक्संज्ञार्थः प्रयोजनवतामेव संज्ञात्वात्। **एओङ्**—ङकार एङ्सज्ञार्थः। **ऐऔच्**—चकारः अच्-इच्-एच्-ऐच्संज्ञार्थः। वर्णानामसन्दिग्धरूपेण बोधनाय अत्र न सन्धिकार्यं संहिताया अविवक्षणात्। स्वराणां निपातत्वेन प्रकृतिभावादपि तथा। **हयवरट्**—टकारः अट्संज्ञार्थः। **लण्**—णकारः इण्संज्ञार्थः क्वचित्तु अण्संज्ञार्थोऽपि। **ञमङणनम्**—मकारः अम्-यम्-ञम्-ङम्संज्ञार्थः।

---

अत्यन्त संक्षिप्त रूप ) सारसिद्धान्तकौमुदी नामक ग्रन्थ की रचना करता हूँ। यह ग्रन्थ व्याकरण-विषयक है, व्याकरण के जिज्ञासु इसके अधिकारी है और बालकों को विषय का आसानी से बोध कराना इसका प्रयोजन है एवं प्रयोजन तथा ग्रन्थ का जन्यजनकभावसम्बन्ध है।

ये अइउण् आदि चौदह सूत्र भगवान् शङ्कर के प्रसाद से पाये गये हैं, अतः ये माहेश्वर हैं और ये सर्वोपरि हैं। ये सूत्र अण् आदि संज्ञा के प्रयोजन के लिए हैं और संज्ञा का प्रयोजन लाघव ( संक्षेप में कह पाना ) है। इन सूत्रों में जो अन्त्य में पढे गये 'ण्' आदि वर्ण हैं, वे इत्संज्ञा के लिए हैं। आदि वर्ण

खफछठथचटतव् ११। कपय् १२। शषसर् १३। हल् १४।
इति माहेश्वराणि सूत्राण्यणादिसंज्ञार्थानि। एषामन्त्या इतः। हकारादिष्वकार उच्चारणार्थः। लण्मध्ये त्वित्संज्ञकः।

---

**झभञ्**—ञकारः यञ्संज्ञार्थः। **घढधष्**—षकारः झष्-भष्संज्ञार्थः। **जबगडदश्**—शकारः अश्-हश्-बश्-नश्-झश्-वश्संज्ञार्थः। **खफ···व्**—वकारः छव्संज्ञार्थः। **कपय्**—यकारः यय्-मय्-झय्-चय्संज्ञार्थः। **शषसर्**—रकारः यर्-झर्-खर्-चर्-शर्संज्ञार्थः। **हल्**—लकारः अल्-हल्-वल्-रल्-झल्-शल्संज्ञार्थः। वल्-रल्-झल्-शल्षु हकारग्रहणाय पुनस्तदुपदेशः।

इत्थं चतुर्दशसूत्राण्युक्त्वा तेषां शास्त्रीयत्वे प्रामाण्यं प्रयोजनञ्चाह—**इतीत्यादिना**। इति=एतानि। माहेश्वराणि—महेश्वरः=शिवः, तत आगतानि=प्राप्तानि। कथ्यते हि—'नृत्तावसाने नटराजराजो ननाद ढक्कां नवपञ्चवारम्। उद्धर्तुकामः सनकादिसिद्धानेतद्विमर्शे शिवसूत्रजालम्'॥ इति। सूत्राणि=सूत्रलक्षणं यथा—'अल्पाक्षरमसन्दिग्धं सारवद्विश्वतोमुखम्। अस्तोभमनवद्यञ्च सूत्रं सूत्रविदो विदुः'॥ इति। तानि च अणादिसंज्ञार्थानि—अण् आदिर्यासान्ता अणादयः अणादयश्च ताः संज्ञाश्च अणादिसंज्ञाः ताः अर्थः प्रयोजनं येषान्तानि अण्प्रभृतिसंज्ञाप्रयोजनानि। अणादिसंज्ञानां गणनाप्रकारमाह—**एषामिति**। एषां=चतुर्दशसूत्राणाम्। अन्त्याः—अन्ते=अवसाने भवाः अन्त्यस्थवर्णाः णादयः। इतः=इत्संज्ञका भवन्तीति। तेन अन्त्येन इता सह आदिर्मध्यगानां स्वस्य च संज्ञा भवतीति; यथा—अण्संज्ञायाम् अ इत्येतस्मादारभ्य ण्पर्यन्तवर्णाः अर्थात् अ इ उ इत्येते वर्णा गृह्यन्ते इति। हयवरेत्यादिषु अकारपाठस्य प्रयोजनमाह—**हकारादिष्वित्यादिना**। हकारादिषु—हकारः आदिर्येषान्ते हकारादयस्तेषु हयवरेत्यादिवर्णेषु। अकारः=अकारपाठः। उच्चारणार्थः—उच्चारणं=सुखेन पठनम्, अर्थः=प्रयोजनं, यस्य स तथाविधः हयवर् इत्युच्चारणे क्लिष्टताऽऽपत्तेः। लण्सूत्रे

---

से लेकर इत्संज्ञावाला वर्ण तक जितने वर्ण हैं उनको उस आदि वर्ण के नाम से संज्ञा मानी जाती है। जैसे—अण् कहने पर आदि वर्ण अ हुआ एवं 'ण्' हुआ इत्संज्ञावाला वर्ण। आदि वर्ण अ को लेकर ण् तक के अ इ उ इन वर्णों की अण् संज्ञा हुई। अ इ उ कहने के बजाय अण् कहने में लाघव पडता है। हकार आदि वर्णों में जो अकार है, वह सुख से उच्चारण के लिए है; उसका और कोई प्रयोजन नहीं है। लण् सूत्र के बीच का अकार तो इत्संज्ञा के लिए भी है

(१) हलन्त्यम् १।३।३ ॥ **उपदेशेऽन्त्यं हलित् स्यात् । उपदेश आद्योच्चारणम् ।**

---

विशेषमाह—**लण्मध्य इत्यादिना** । लण्मध्य—लणः=लण् इति सूत्रस्य मध्ये । तु=तद्विपरीतम् । यः अकारः स । इत्संज्ञकः=इत्संज्ञानिमित्तकोऽपि इत्संज्ञा च 'उपदेशेऽजनुनासिक इत्' इति । प्रयोजनञ्च 'र'प्रत्याहारस्य गणना तत्प्रदेशश्च 'उरण् रपरः' इत्यादौ । तत्र 'र' इति रप्रत्याहारग्रहणेन ऌस्यापि ग्रहणमिति । इदं श्रीमत्कैयटानुरोधेन । नागेशादिमते तु न तथा 'अतो ऌान्तस्य' इत्यादौ रलयोरेव ग्रहणदर्शनात् । उरणित्यादौ रकारेण सवर्णसंज्ञयैव लकारोऽपि गृह्यते । तेन लण्सूत्रस्थाकारोऽपि उच्चारणार्थ एवेति ।

**हलन्त्यमिति**—हल् अन्त्यं द्विपदमिदं सूत्रम् । सूत्रलक्षणं षड्विधं—सञ्ज्ञासूत्रं, परिभाषासूत्रं, विधिसूत्रं, नियमसूत्रम्, अतिदेशसूत्रम् अधिकारसूत्रञ्च । तत्र परिचायकः शब्दः संज्ञा तत्प्रबन्धकं सूत्रं संज्ञासूत्रम् । यथा 'हलन्त्यम्' परिग्राहकसूत्रं, परिभाषासूत्रं यथा 'इको गुणवृद्धी' अत्यन्ताप्राप्तौ प्रापकं विधिसूत्रं यथा 'इको यणचि' इतरव्यावर्तकं नियमसूत्रं यथा 'पतिः समास एव' अन्यधर्मस्यान्यस्मिन्नारोपकमतिदेशसूत्रं यथा 'स्थानिवदादेशोऽनल्विधौ' तथा विषयप्रवर्तकसूत्रमधिकारसूत्रं यथा 'तद्धिता' इति । 'उपदेशेऽजनुनासिक इत्' (१।३।२) इति सूत्रात् इत् इत्यनुवर्तते उपदेशे इति च । **उपदेश इति** । उपदेशे=प्रथमोच्चारणकाले, उक्तं यथा—'धातुसूत्रगणोणादिवाक्यलिङ्गानुशासनम् । आगमप्रत्ययादेशा उपदेशाः प्रकीर्तिताः' ॥ इति । अन्त्यं=शब्दान्तर्वर्तित्वेन पठितम् । हल्=आद्यहकारादारभ्य ल्वर्णपर्यन्तं ये वर्णा हयवरलादयः । इत्=इत्संज्ञकः । स्यात् । **उपदेश इति** । उपदेशः=उपदेशशब्देन यद् गृह्यते तत् । आद्योच्चारणं=प्रथमवारकथनम् । आद्योच्चारणविषयीभूतो यः शब्दस्तस्यान्त्यं हलित्स्यादिति सूत्राशयः । थमुप्रत्ययस्य उपदेशे हलन्तत्वाभावेन इत्थम् इत्यत्र न मस्येत्संज्ञा ।

---

और उससे 'र' प्रत्याहार की सिद्धि होती है—ऐसा कैयट आदि विद्वान् मानते हैं; लेकिन नागेश आदि विद्वान् इसे भी उच्चारण के लिए ही मानते हैं, क्योंकि र् से ल् का भी ग्रहण सवर्णसंज्ञा से ही हो जाता है ।

**हलन्त्यम्**—उपदेश काल में पढ़ा गया अन्त्य का हल् वर्ण इत्संज्ञक होता है । उपदेश का अर्थ है—पहली बार किया गया उच्चारण अर्थात् प्रथम बार के उच्चारण का स्वरूप ।

( २ ) अदर्शनं लोपः १।१।६० ।। **प्रसक्तस्यादर्शनं लोपसंज्ञं स्यात् ।**

( ३ ) तस्य लोपः १।३।९ ।। **तस्येतो लोपः स्यात् । णादयोऽणाद्यर्थाः ।**

( ४ ) आदिरन्त्येन सहेता १।१।७१ ।। **अन्त्येनेता सहित आदिर्मध्यगानां स्वस्य च संज्ञा स्यात् । यथा--अणिति अइउवर्णानां संज्ञा । एवम्—अच् हल् अल् इत्यादयः ।**

---

**अदर्शनमिति** । अदर्शनं लोपः द्विपदमिदं सूत्रम् ।

प्रसक्तस्य=प्राप्तोच्चारणस्य शास्त्रतोऽर्थतश्च विद्यमानस्येति । अदर्शनम्= अश्रवणम् । विद्यमानस्याश्रवणं लोप उच्यतेऽविद्यमानस्य तु न ।

**तस्येति** । तस्य लोपः द्विपदमिदं सूत्रम् । प्रवृत्तिश्च 'उपदेशेऽजनुनासिक इत्' इत्यादीत्संज्ञकसूत्राण्यनुवृत्य । **तस्येति** । तस्य=तथोक्तस्य । इतः=इत्संज्ञकवर्णस्य यस्य इत्संज्ञा विहिता तस्येति । इत्संज्ञा च उपदेशे अनुनासिकस्य अचः अन्त्यस्य हलः विभक्तिस्थतवर्गसकारमकारवर्जम् आदिस्थानां ञिः टुः डुः इत्येतेषां प्रत्ययादिस्थस्य षकारस्य चवर्गस्य टवर्गस्य च तद्धितवर्जं लकारशकारकवर्गाणाञ्च भवति । लोपः=अश्रवणमनुच्चारणमभावो वा । माहेश्वरसूत्रेषु अन्त्यवर्णोच्चारणस्य प्रयोजनमाह—**णादय इति** । णादयः=ण् आदिर्येषान्ते णादयः ण् इत्यारभ्य ल्पर्यन्ता इत्संज्ञालोपनिमित्तकवर्णाः । अणाद्यर्थाः= अणादिप्रत्याहारप्रयोजकाः । आदितः इत्संज्ञकवर्णमादायैव प्रत्याहारगणना सम्भवति; यथा अण् इत्युक्ते अ इ उ इत्येतेषां ग्रहणमिति ।

**आदिरिति** । आदिः अन्त्येन सह इता चतुष्पदमिदं सूत्रम् । अन्त्येन इता सह आदिः इत्यन्वयः । **अन्त्येनेति** । अन्त्येन=माहेश्वर( प्रत्याहार )सूत्रे सूत्रान्त्यस्थेन अन्ते भवः अन्त्य इति । इता=इत्संज्ञकवर्णेन णादिना । सह= युतः परिगणित इति । आदिः=यस्मात्पूर्वं नास्ति परमस्ति स उच्चार्यमाणः

---

पहले उच्चारण किये गये वर्ण का फिर सुनाई न पड़ना लोप कहा जाता है । पहले वहाँ जो वर्ण विद्यमान था, यदि बाद में वह सुनाई न पड़े तो वैसा सुनाई न पड़ना लोपसंज्ञक होता है ।

उस इत्संज्ञा होने वाले वर्ण का लोप होता है अर्थात् जिसको इत्संज्ञा होती है वह वर्ण फिर सुनाई नहीं पड़ता ।

**आदिरिति** । माहेश्वरसूत्र के अन्त्य में इत्संज्ञा होने वाला जो वर्ण है, उससे युक्त आदि का वर्ण उन दोनों के मध्य में आने वाले वर्णों की तथा स्वयं

वर्णः, यथा अण् इत्यत्र अ इति । मध्यगानाम्—आद्यन्तयोर्मध्यवर्तिनां वर्णानां, यथा अण् इत्यत्र इ उ इत्येतयोः । स्वस्य=आत्मनश्चेति । संज्ञा=आद्यन्तवर्ण-युक्तसंज्ञा, यथा अण् इति अ इ उ इत्येतेषां संज्ञा इति । अत्र आदित्वं न सूत्रा-पेक्षं किन्तु तत्कालगृहीतसमुदायापेक्षम् । तेन इण् इत्यत्र इ एवादिः । संज्ञाविधौ इत्संज्ञकवर्णानां न ग्रहणमिति अक् इत्युक्ते 'अ इ उ ऋ ऌ' इत्येतेषामेव ग्रहणं न तु णकारस्यापि । अनुनासिक इत्यत्र इकारस्य ककारमचं मत्वा यणभाव एवात्र निदर्शनम् । दृष्टान्तमाह—**यथेति** । अण् इति=अण् इति समुदायः यत्र कुत्रापि अण् इत्युच्यते स इति अ इ उ वर्णानां संज्ञा=यत्र आदिः अः अन्त्यस्तु इत् ण् तेन णकारेण गृहीतः अकारः स्वमारभ्य ण्पर्यन्तवर्णानाम् इ उ इत्येतयोः स्वस्य चेति अ इ उ इत्येतेषामेव संज्ञा भवति । तेन अण् इत्युक्ते अ इ उ वर्णा ज्ञायन्ते इत्याशयः । यथा 'उरण् रपर' इत्यत्र अण् इति अ इ उ वर्णाः तेन कृ–करोति गॄ–गिरति मृ–मुमूर्षते इत्यादि । एवम्=अनेनैव विधिना । अच्=अकारादा-रभ्य च्पर्यन्तानाम् अ इ उ ऋ ऌ ए ओ ऐ औ इत्येतेषां वर्णानां संज्ञा । हल् इति हयवरट् इति सूत्रस्थहकारादारभ्य 'ल्'पर्यन्तानां ह य व र ल ञ म ङ ण न झ भ घ ढ ध ज ब ग ड द ख फ छ ठ थ च ट त क प श ष स ह इत्ये-तेषां वर्णानां संज्ञा, अल् इति अकारादारभ्य 'ल्'पर्यन्तानां सर्वेषां वर्णानां संज्ञा । प्रदेशास्तु उरण् रपरः, इको यणचि, हलि सर्वेषाम्, अलोऽन्त्यस्येत्यादयः । इत्या-दिना इक् उक् एङ् अट् इत्याद्येकचत्वारिंशत्प्रत्याहाराणां ग्रहणम् । उक्तं यथा—

'एकस्मात् ङञणवटाः द्वाभ्यां षः त्रिभ्य एव कणमाः स्युः ।
ज्ञेयौ चयौ चतुर्भ्यः रः पञ्चभ्यः शलौ षड्भ्यः' ।। इति ।

यद्वा—'एकं त्रीणि पुनश्चैकं चत्वार्येकं त्रयं त्रयम् ।
एकं द्वे षट् तथैवैकं चतुः पञ्च षडेव च' ।। इति ।

---

अपनी भी संज्ञा होता है । जैसे—अण् यह अ इ उ वर्णों की संज्ञा है, जिसमें अन्त्य का इत्संज्ञक वर्ण ण् है, आदि का वर्ण अ है एवं बीच के वर्ण हैं इ उ—इन तीनों को अण् से जाना जाता है अर्थात् अण् कहने से ये तीनों वर्ण आ जाते हैं । इसी तरह अच्=अ से 'च्' तक के वर्णों की संज्ञा, हल्=ह से 'ल्' तक के वर्णों की संज्ञा, अल्=अ से 'ल्' तक के वर्णों की संज्ञा है । इसी तरह इक्, एङ्, अट् आदि ४१ प्रत्याहार शास्त्र में प्रयुक्त हैं, वैसे बनते तो बहुत हैं । 'र' 'चय्' 'ञम्' की भी गणना करके ४४ प्रत्याहार गिने जाते हैं ।

(५) ऊकालोऽज्झ्रस्वदीर्घप्लुतः १।२।२७ ॥ **उश्च ऊश्च ऊ३श्च वः, वां काल इव कालो यस्य सोऽच् क्रमाज्झ्रस्वदीर्घप्लुतसंज्ञः स्यात् ।**

---

गणनेयं णकाराद्यैश्चतुर्दशभिरनुबन्धैर्यथाक्रमम् । रचय्जमानामपि गणनया तेषां सङ्ख्या चतुश्चत्वारिंशदुच्यते ।

**ऊकाल इति** । ऊकालः अच् ह्रस्वदीर्घप्लुतः त्रिपदमिदं सूत्रम् । उश्च ऊश्च ऊ३श्चेति वः, वां काल इव उच्चारणकालो यस्य स तादृशः । अच् = अज्वर्णः । ह्रस्वदीर्घप्लुतः = ह्रस्वश्च दीर्घश्च प्लुतश्च सः । एकवद्भावस्तु सर्वोऽपि द्वन्द्वो विभाषैकवद्भवतीति । पुंस्त्वं तु सौत्रं 'व्यत्ययो बहुलमि'ति छन्दसि विधानात्सूत्राणां छन्दोवत्त्वात् । अयं तिसृणां संज्ञानां द्वन्द्वः । तेन ह्रस्वसंज्ञा दीर्घसंज्ञा प्लुतसंज्ञेति । संज्ञानां त्रित्वात्संज्ञिनामपि त्रित्वमिति ऊकाल इत्यत्र ऊः कालो यस्येति विगृह्य ऊरिति त्रयाणामेकमात्रिकद्विमात्रिकत्रिमात्रिकाणां प्रश्लिष्टनिर्देश इति ज्ञेयम् । तेन यावता कालेन उरित्युच्चार्यते तावता उच्चार्यमाण एकमात्रिकोऽच् ह्रस्वः, एवम् ऊ इति यावता कालेनोच्चार्यते तावतोच्चार्यमाणो द्विमात्रिकोऽच् दीर्घः, ऊ ३ इति यावता कालेनोच्चार्यते तावतोच्चार्यमाणस्त्रिमात्रिकोऽच् प्लुत इति सूत्राशयः । यथा उकालो ह्रस्वः—दधि, मधु । ऊकालो दीर्घः—कुमारी, गौरी । ऊ३कालः प्लुतः—देवदत्त ३ अत्र न्वसि । **उश्चेति** । उश्च ऊश्च ऊ३श्च वः=उश्च ऊश्च ऊ३श्चेति त्रयाणां सवर्णदीर्घे कृते जसि परतो यणि रूपं व इति । वां = त्रयाणामेव उकाराणाम् उ—ऊ ऊ३ इत्येतेषां ( सवर्णदीर्घे कृति आमि यणि रूपम् ), कालः = उच्चारणकालः । इव । कालः =

---

**ऊकाल इति** । उ, ऊ, ऊ३ इन तीनों को एक साथ रखने से 'वः' होता है । वाम् अर्थात् उन तीन ही—उ, ऊ एवं ऊ३ के उच्चारण करने में जितना समय लगता है उतने ही समय में उच्चारण हो सकता है जिसका, ऐसा अज्वर्ण क्रम से ह्रस्व, दीर्घ एवं प्लुत संज्ञा वाला होता है, अर्थात् 'उ' के उच्चारण करने में जो समय लगता है उतने ही समय में जिसका उच्चारण हो सके, वह अच् एकमात्रिक होता है एवं ह्रस्वसंज्ञक होता है, ऊ के उच्चारण करने में जो समय लगता है उतने ही समय में जिसका उच्चारण हो, वह अच् द्विमात्रिक एवं दीर्घसंज्ञक होता है तथा ऊ३ के उच्चारण करने में जो समय लगता है, वह अच् त्रिमात्रिक एवं प्लुतसंज्ञक होता है । इस तरह अच् की तीन प्रकार की संज्ञा हुई ।

**स प्रत्येकमुदात्तादिभेदेन त्रिधा—**

**( ६ ) उच्चैरुदात्तः १।२।२९ ॥ ( ताल्वादिषु सभागेषु स्थानेषूर्ध्वभागे निष्पन्नोऽजुदात्तसंज्ञः स्यात् । )**

**( ७ ) नीचैरनुदात्तः १।२।३० ॥ ( ताल्वादिषु सभागेषु स्थानेष्वधोभागे निष्पन्नोऽजनुदात्तसंज्ञः स्यात् । )**

---

उच्चारणकालः, यस्य=अचः । सः=तादृशः उकालसमानकालोच्चारणीयः ऊकालतुल्यकालोच्चारणीयः ऊ३कालतुल्यकालोच्चारणीयः । अच्=अज्वर्णः । क्रमात्=यथाक्रमम् । ह्रस्वदीर्घप्लुतसंज्ञः—ह्रस्वः=एकमात्रिकः, दीर्घः=द्विमात्रिकः, प्लुतः=त्रिमात्रिकः, संज्ञा=अभिधानं, यस्य सः तादृशः । स्यादिति । तदित्थम्—एकमात्रिकोऽच् ह्रस्वसंज्ञः, द्विमात्रिकोऽच् दीर्घसंज्ञः, त्रिमात्रिकोऽच् प्लुतसंज्ञो भवतीति ।

**स इति** । सः=ह्रस्वः दीर्घः प्लुतश्चेति त्रिविधोऽच् । प्रत्येकं=एकैकशः ह्रस्वः दीर्घः प्लुतश्चेति । उदात्तादिभेदेन—उदात्तः=उच्चैः, आदिः=प्रथमो यस्य तादृशो यो भेदः अनुदात्ताख्यः स्वरिताख्यश्च, तेन उदात्तानुदात्तस्वरितभेदेनेति । त्रिधा=त्रिप्रकारकः भवतीति भावः । तदेव वक्ष्यति त्रिभिः सूत्रैः—**उच्चैरिति** । 'उच्चैरुदात्तः' द्विपदमिदं सूत्रम् । उच्चैः=उच्चस्वरेण पठितोऽच् । उदात्तः=उदात्तसंज्ञकः । योऽच् उच्चस्वरेण पठ्यते स उदात्तसंज्ञक इति ।

**ताल्वादिष्विति** । ताल्वादिषु--तालुः आदिर्येषान्ते तेषु=तालुकण्ठमूर्द्धदन्तोष्ठप्रभृतिषु । सभागेषु=ऊर्ध्वाधोभागयुक्तेषु । स्थानेषु=उच्चारणस्थानेषु । ऊर्ध्वभागे=उपरिभागे । निष्पन्नः=निःसृत उच्चरित इति । अच् । **उदात्तसंज्ञः** =योऽच् ताल्वादिषु स्थानानामूर्ध्वभागान्निष्पन्नो भवति स उदात्तसंज्ञ इति ।

---

**स इति** । वह ह्रस्व आदि प्रत्येक अच् उदात्त आदि ( उदात्त, अनुदात्त, स्वरित ) के भेद से तीन-तीन प्रकार का होता है ।

**उच्चैरिति** । भागों से युक्त तालु, कण्ठ आदि स्थानों में ऊपर के भाग से निकलने वाला अच् उदात्त होता है । यह रूखा लगता है और इसमे कण्ठ का छिद्र संवृत होता है ।

**नीचैरिति** । भागों से युक्त तालु आदि स्थानों में नीचले भाग से निकलने वाला अच् अनुदात्त कहलाता है । यह कोमल होता है एवं इसमें कण्ठ का विवर फैल जाता है ।

( ८ ) समाहारः स्वरितः । १।२।३१ ।। ( **उदात्तानुदात्तत्वे वर्णधर्मौ समाह्रियेते यस्मिन् सोऽच् स्वरितसंज्ञः स्यात् ।** )

**स नवविधोऽपि प्रत्येकमनुनासिकाननुनासिकत्वाभ्यां द्विधा ।**

( ९ ) मुखनासिकावचनोऽनुनासिकः १।१।८ ।। **मुखसहितनासिकयोच्चार्यमाणो वर्णोऽनुनासिकसंज्ञः स्यात् ।**

---

**नीचैरिति** । 'नीचैरनुदात्तः' द्विपदमिदं सूत्रम् । नीचैः=नीचस्वरेणोपलभ्यमानः । अच् । अनुदात्तः=अनुदात्तसंज्ञ इति । **ताल्वादिष्विति** । अधोभागे=नीचभागे । यश्च ताल्वादीनामुच्चारणावयवानामधोभागान्निष्पद्यते सोऽजनुदात्तसंज्ञ इति । **समाहार इति** । 'समाहारः स्वरितः' द्विपदमिदं सूत्रम् । समाहारः =उदात्तानुदात्तयोः समुदायः अस्ति अस्मिन्निति तादृशः । अच् । स्वरितः= स्वरितसंज्ञः । **उदात्तत्वेति** । उदात्तत्वानुदात्तत्वे=उदात्तत्वम् अनुदात्तत्वञ्च ते । वर्णधर्मौ=वर्णगुणौ । यस्मिन्=अचि । समाह्रियेते=समुदीयेते । सः=तादृशः उभयगुणविशिष्टः । अच् । स्वरितसंज्ञः इति । इत्थं हि ह्रस्वोऽच् त्रिविधः— उदात्ताऽनुदात्तः स्वरितश्चेति । एवं दीर्घोऽपि तथा प्लुतश्चेति अचो नवविधाः ।

**स इति** । सः=तथाविधः, नवविधः=नवप्रकारकः । अच् । प्रत्येकं= एकैकशः । अनुनासिकाननुनासिकत्वाभ्याम्=अनुनासिकत्वेन अननुनासिकत्वेन चेति । द्वन्द्वान्ते श्रूयमाणत्वात्त्वशब्दस्य प्रत्येकं योगः । ताभ्यां प्रकाराभ्याम् । द्विधा=द्विविध इति । तदेवमनुनासिका नव अननुनासिका नवेति अष्टादशविधत्वमेकैकस्या च इति । अनुनासिकसंज्ञामाह—**मुखेति** । 'मुखनासिकावचनोऽनुनासिकः' द्विपदमिदं सूत्रम् । मुखनासिकावचनः—मुखसहिता नासिका मुखनासिका ( न तु मुखञ्च नासिका चेति तथा सति प्राण्यङ्गत्वेन एकवद्भावान्नपुंसकत्वेन ह्रस्वे मुखनासिक इत्येव स्यात् ) उच्यत इति वचनमुच्चारणं

---

**समाहार इति** । जिस अच् में उदात्तत्व एवं अनुदात्तत्व ये दोनों वर्ण के धर्म ( गुण ) समाहृत हो जाते हैं, वह अच् स्वरित कहलाता है । यह दोनों के बीच का एक रूप है ।

**स इति** । वह नौ प्रकार का अच् भी प्रत्येक अनुनासिकत्व एवं अननुनासिकत्व के भेद से दो प्रकार का होता है । इस तरह अनुनासिक नौ एवं अननुनासिक नौ करके प्रत्येक अच् के अट्ठारह-अट्ठारह भेद हो जाते हैं ।

**मुखेति** । मुख से युक्त नाक से उच्चारण होने वाला वर्ण अनुनासिकसंज्ञक

**तदित्थम्—अ इ उ ऋ एषां बर्णानां प्रत्येकमष्टादशभेदाः। ऌवर्णस्य द्वादश तस्य दीर्घाभावात्। एचामपि द्वादश तेषां ह्रस्वाभावात्।**

---

मुखनासिकया वचनमस्येति मुखनासिकावचनः=यस्योच्चारणं मुखसहितनासिकया क्रियते तादृशः वर्णः। अनुनासिकः=अनुनासिकसंज्ञ इति। **मुखेति**। मुखसहितनासिकया—मुखेन सहिता या नासिका मुखसहितनासिका तया। उच्चार्यमाणः=उच्यमानः। वर्णः। अनुनासिकसंज्ञः=अनुनासिक इति संज्ञितः। स्यादिति। अनुनासिकशब्देन यथा 'उपदेशेऽजनुनासिक इत्' इत्यादौ तादृशो वर्णो गृह्यते यो हि मुखसहितया नासिकया उच्चार्यते इति।

अचां भेदेषु यद्वैशिष्टयं तदाह—**तदिति**। तत्=तस्मात्, अचः प्रथमतस्तु ह्रस्वदीर्घप्लुतभेदेन त्रैविध्यं ततश्च त्रिविधानां तेषां प्रत्येकमुदात्तानुदात्तस्वरितभेदेन त्रैविध्यं तेषाञ्च प्रत्येकमनुनासिकाननुनासिकभेदेन द्वैविध्यमिति एकैकस्याचोऽष्टादश भेदा भवन्ति ततः। इत्थम्=उक्तप्रकारेण। अ इ उ ऋ एषां=ह्रस्वदीर्घप्लुतप्रकृतिकानां, वर्णानाम्=अचाम्। प्रत्येकम्=एकैकशः। अष्टादश=अष्टादशसङ्ख्याकाः। भेदाः=प्रकाराः। अकारः अष्टादशविधः एवम् इकारः, उकारः ऋकारश्चेति। गणना त्वित्थम्—

| | | | | | |
|---|---|---|---|---|---|
| ह्रस्वः | उदात्तः | अनुनासिकः | अननुनासिकश्च | २ | ६ |
| ,, | अनुदात्तः | ,, | ,, | २ | |
| ,, | स्वरितः | ,, | ,, | २ | |
| दीर्घः | उदात्तः | ,, | ,, | २ | ६ |
| ,, | अनुदात्तः | ,, | ,, | २ | |
| ,, | स्वरितः | ,, | ,, | २ | |
| प्लुतः | उदात्तः | ,, | ,, | २ | ६ |
| ,, | अनुदात्तः | ,, | ,, | २ | |
| ,, | स्वरितः | ,, | ,, | २ | |
| | | | | १८ | |

---

होता है। अर्थात् अनुनासिक संज्ञा उस वर्ण की होती है, जो मुख से युक्त नासिका से उच्चरित होता है।

तो इस प्रकार अ इ उ ऋ—इन वर्णों में से प्रत्येक के अठ्ठारह-अठ्ठारह भेद हो जाते हैं। ऌकार के केवल बारह भेद ही होते हैं, क्योंकि उसका दीर्घ नहीं होता। एच् अर्थात् ए ओ ऐ औ में से प्रत्येक के भी बारह-बारह ही भेद

**(१०) तुल्यास्यप्रयत्नं सवर्णम् १।१।९॥ ताल्वादिस्थानमाभ्यन्तर-प्रयत्नश्चेत्येतद्द्वयं यस्य येन तुल्यं तन्मिथः सवर्णसंज्ञं स्यात्। (ऋऌवर्ण-योर्मिथः सावर्ण्यं वाच्यम्—वा०)।**

---

**ऌवर्णस्येति**। ऌवर्णस्य=ऌकारस्य, द्वादश=द्वादशैव भेदाः। तत्र हेतु-माह—**तस्येति**। तस्य=ऌवर्णस्य। दीर्घाभावात्=द्विमात्रिकरूपाभावात्। ऌकारस्य दीर्घाभावे होतृ+ऌकारः=होतॣकार इति रूपमेव। तस्य दीर्घाभावेन ह्रस्वस्य प्लुतस्य च षट् षडिति तस्य द्वादशैव भेदाः।

**एचामिति**। एचाम्=ए ओ ऐ औ इत्येतेषाम्। अपि=च। द्वादश=द्वादशैव भेदाः, दीर्घाणां प्रत्येकं षट् प्लुतानामपि तथेति। तत्र हेतुमाह—**तेषा-मिति**। तेषां=एचाम्। ह्रस्वाभावात्=एकमात्रिकरूपाभावात्। यदि नाम तेषां ह्रस्वाः स्युस्तर्हि वर्णसमाम्नाये त एव पठ्येरन् लाघवात् न तु दीर्घा गौरवात् अ इ उ इत्यादिवदिति। इत्थं हि ह्रस्वस्वराः त्रिंशदेव दीर्घस्वरास्तु अष्टा-चत्वारिंशत् प्लुतस्वरास्तु चतुःपञ्चाशदेवेति द्वात्रिंशदधिकैकशतभेदा अचामुक्ताः।

सवर्णसंज्ञां निर्वक्ति—**तुल्येति**। 'तुल्यास्यप्रयत्नं सवर्णम्' द्विपदमिदं सूत्रम्। तुल्यास्यप्रयत्नं—तुल्यौ=समानौ, आस्यम्=उच्चारणस्थानं, प्रयत्नः=उच्चा-रणे प्रकृष्टो यत्नः स्पृष्टतादिश्च तौ आस्यप्रयत्नौ ययोर्वर्णयोस्तत् तादृशं वर्ण-द्वयम्। सवर्णं=सवर्णसंज्ञकं भवतीति। **ताल्वादीति**। ताल्वादिस्थानं=तालु-कण्ठप्रभृतिवर्णोच्चारणस्थानम्। आभ्यन्तरप्रयत्नः=उच्चारणार्थं कण्ठविव-रादौ यः प्रकृष्टो यत्नः क्रियते सः। च। इति एतद्द्वयं=एतदुभयम्। यस्य=वर्णस्य। येन=वर्णेन। सह। तुल्यं=समानम्। तत्=तादृशं समानजातीयो-च्चारणस्थानाभ्यन्तरप्रयत्नं वर्णद्वयम्। मिथः=अन्योन्यम्। सवर्णसंज्ञं=सवर्णसंज्ञयाऽभिहितम्। स्यात्। सवर्णशब्देन यथा 'अकः सवर्णे दीर्घः' इत्यादौ स एव वर्णः सूच्यते यस्य प्रकृतेन सह उच्चारणस्थानमाभ्यन्तरप्रयत्नश्चेति द्वयमेव

---

होते हैं, क्योंकि उनका ह्रस्व नहीं होता। (यदि इनका भी ह्रस्व होता तो वही लाघव की दृष्टि से वर्णसमाम्नाय में पढ़ा जाता, न कि दीर्घ; क्योंकि उसमें गौरव पड़ता है।)

**तुल्येति**। तालु आदि उच्चारण स्थान एवं स्पृष्ट आदि आभ्यन्तर प्रयत्न—ये दोनों जिस वर्ण के जिस वर्ण के साथ समान हैं, वे दोनों वर्ण परस्पर सवर्णसंज्ञक होते हैं।

**अकुहविसर्जनीयानां कण्ठः । इचुयशानां तालु । ऋटुरषाणां मूर्धा । लृतुलसानां दन्ताः । उपूपध्मानीयानामोष्ठौ । ञमङणनानां नासिका च । एदैतोः**

---

समानं स्यादिति । **ऋलृवर्णयोरिति** । ऋलृवर्णयोः = ऋकारलृकारयोः । मिथः= परस्परम् । सावर्ण्यं = सवर्णभावः । वाच्यं = कथनीयम् । ऋकारः लृकारश्च मिथः सवर्णौ भवतः ।

तर्हि कस्य वर्णस्य किं स्थानमित्यपेक्षायामेतद्विषये शिक्षावचनानि अर्थतः सङ्गृह्णाति—**अकुहेत्यादिना** । अकुहविसर्जनीयानाम्—अः=अष्टादशविधोऽकारः, च कुः = कादिपञ्चकात्मकः कवर्गः, लोकेऽपि तथाप्रसिद्धेः । हः=हकारः । विसर्जनीयः=विसर्गः च तेषाम् अष्टादशविधाकारकवर्गहकारविसर्गाणां हि । कण्ठः= कण्ठस्थानमुच्चारणस्येति एतेषामुच्चारणेऽन्यापेक्षया तस्यैवाधिकायामत्वात् ।

**इचुयेति** । इः = अष्टादशविध इकारः, च चुः = चादिपञ्चकात्मकश्चवर्गः, च यः = यकारः, शः = तालव्यशकारश्च तेषाम् । तालु = तालुस्थानमुच्चारणस्य जिह्वामध्यभागेन तालुमध्यं स्पृष्ट्वैव तेषामुच्चारणसम्भवात् ।

**ऋटुरेति** । ऋः = अष्टादशविध ऋकारः, च टुः = टादिपञ्चकात्मकष्टवर्गः, च रः = रकारः, च षः = मूर्धन्यषकारश्च तेषाम् । मूर्धा = मूर्धस्थानमुच्चारणस्य जिह्वाग्रेण मूर्धानं ( दन्तमूलभागं ) स्पृष्ट्वैव तेषामुच्चारणसम्भवात् ।

**लृतुलेति** । लृः = लृकारो द्वादशविधः, च पुः = तादिपञ्चकात्मकः तवर्गः, च लः = लकारः, च सः = दन्त्यसकारश्च तेषाम् । दन्ताः = दन्तस्थानान्युच्चारणस्येति । जिह्वाग्रेण दन्ताग्रं स्पृष्ट्वैव तेषामुच्चारणसम्भवात् ।

---

**ऋलृवर्णयोरिति** । ऋकार एवं लृकार की भी परस्पर सवर्णता होती है ।

**अकुहेति** । अठ्ठारहों प्रकार का अकार, कवर्ग अर्थात् क ख ग घ ङ, हकार एवं विसर्ग—इनका कण्ठ स्थान होता है । इनके उच्चारण में कण्ठ में जोर पड़ता है ।

**इचुयेति** । अठ्ठारहों प्रकार का इकार, चवर्ग अर्थात् च छ ज झ ञ, यकार एवं शकार—इनका तालु स्थान होता है । इनके उच्चारण में जीभ का मध्यभाग तालु को छू लेता है ।

**ऋटुरेति** । अठ्ठारहों प्रकार का ऋकार, टवर्ग अर्थात् ट ठ ड ढ ण, रकार एवं षकार—इनका मूर्धा स्थान होता है । इनके उच्चारण में जीभ का अग्रभाग दन्तमूल को छू लेता है ।

**कण्ठतालु । ओदौतोः कण्ठोष्ठम् । वकारस्य दन्तोष्ठम् । जिह्वामूलीयस्य जिह्वा-मूलम् । नासिकाऽनुस्वारस्य ।**

---

**उपूपध्मानीयेति** । उः = अष्टादशविध उकारः, च पुः = पादिपञ्चकात्मकः पवर्गः, उपध्मानीयः = पफाभ्यां प्राग्वर्ती अर्धविसर्गसदृशः, च तेषाम् । ओष्ठौ = ओष्ठौ हि उच्चारणस्थानं, तयोः लम्बनसंयोगादिकं विना तेषामुच्चारणा-सम्भवात् ।

**ञमेति** । ञमङणनानां = वर्गपञ्चमवर्णानां तेषाम् । नासिका = नासिका उच्चारणस्थानं तेषामुच्चारणे तस्यायामात् । च इति समुच्चये, वर्गसम्बन्धेन यदुच्चारणस्थानं तदपि तेषामस्त्येवेति । तेन ङकारस्य कण्ठो नासिका च स्थान-मिति ।

**एदैतोरिति** । एदैतोः—एत् = एकारः, च ऐत् = ऐकारः, च तयोः एकारै-कारयोः तपरकरणमसन्देहार्थं न तु तत्कालग्रहणार्थं, तेन एकारो द्वादशविध एकारश्च । कण्ठतालु = कण्ठश्च तालु च कण्ठतालु, प्राण्यङ्गत्वेन एकवद्भावः क्लीबत्वञ्च

**ओदौतोरिति** । ओदौतोः = द्वादशविधयोरोकारौकारयोः तपरकरणस्या-सन्देहार्थमात्रत्वात् । कण्ठोष्ठम् = कण्ठश्च ओष्ठौ च तत्, प्राण्यङ्गत्वादेकवद्भावो नपुंसकत्वञ्च ।

**वकारस्येति** । वकारस्य = व इति वर्णस्य । दन्तोष्ठं = दन्ताः च ओष्ठौ च तत्, प्राण्यङ्गत्वेनैकवद्भावः क्लीबत्वञ्च ।

---

**लृतुलेति** । बारह प्रकार का लृकार, तवर्ग अर्थात् त थ द ध न, लकार एवं सकार—इनका दन्त स्थान होता है। इनके उच्चारण में जीभ का अग्रभाग दाँत को छू लेता है।

**उपूपध्मानीयेति** । अठ्ठारहों प्रकार का उकार, पवर्ग अर्थात् प फ ब भ म, उपध्मानीय ( प फ से पहले आने वाला आधा विसर्ग )—इनका ओष्ठ स्थान होता है। इनके उच्चारण में दोनों होठ लम्बमान एवं संयुक्त हो जाते हैं।

**ञमेति** । ञ म ङ ण न—इनका नासिका स्थान भी होता है और अपना-अपना वर्गीय स्थान भी। इनके उच्चारण में नाक प्रभावित हो जाता है।

बारह ही प्रकार के ए एवं ऐ का कण्ठतालु स्थान होता है।

बारह ही प्रकार के ओ एवं औ का कण्ठतालु स्थान होता है।

**यत्नो द्विधा—आभ्यन्तरो बाह्यश्च। आद्यः पञ्चधा—स्पृष्टेषत्स्पृष्टेषद्वि-वृतविवृतसंवृतभेदात्। तत्र स्पृष्टं प्रयत्नं स्पर्शानाम्। ईषत्पृष्टमन्तःस्थानाम्।**

---

**जिह्वेति।** जिह्वामूलीयस्य=कखाभ्यां प्राग्वर्तिनः अर्धविसर्गसदृशस्य। जिह्वामूलम्=उच्चारणस्थानमिति।

**नासिकेति।** अनुस्वारस्य=स्वरमूर्धगतमकारस्य। नासिका=उच्चारण-स्थानमिति। इति वर्णानामुच्चारणस्थानानि सङ्क्षेपतो निर्दिष्टानि।

सवर्णसूत्रे तुल्यास्यप्रयत्नयोर्वर्णयोः सावर्ण्यं यदुक्तं तत्प्रसङ्गे वर्णानामुच्चा-रणस्थानं निरूप्य सम्प्रति तेषामुच्चारणार्थमावश्यकं प्रयत्नविशेषं निरूपयति शिक्षाग्रन्थमाश्रित्य—**यत्न इत्यादिना**। यत्नः=आयामः, वर्णानामुच्चारणे यः यत्न आवश्यकः सः। द्विधा=द्विप्रकारकः भवतीति शेषः। एकः आभ्यन्तरः—अभ्यन्तरम्=अन्तः, तत्र भव आभ्यन्तरः=आन्तरिकः। अन्यः बाह्यः=बहिः भवः बाह्यः। च इत्युभयसमुच्चयार्थः। वर्णानामुच्चारणे भवति आन्तरिको बाह्यश्चेति यत्नद्वयम्। तत्र आद्यः=प्रथमः आभ्यन्तर इति। पञ्चधा=पञ्चप्रकारकः। स्पृष्टेषत्स्पृष्टेषद्विवृतविवृतसंवृतभेदात्=स्पृष्टः ईषत्स्पृष्टः ईष-द्विवृतः विवृतः संवृतः च इति भेदेन। नाभिप्रदेशात्प्रयत्नप्रेरितो वायुरूर्ध्वमा-क्रामन् उरःप्रभृतीनि स्थानान्याहन्ति ततो वर्णाभिव्यञ्जकध्वनेरुत्पत्तिर्भवति। तत्र उत्पत्तेः प्राग्यदा जिह्वायाः अग्रोपाग्रमध्यमूलानि तत्तद्वर्णोत्पत्तिस्थानं

---

वकार का दन्त-ओष्ठ स्थान होता है।

जिह्वामूलीय ( क ख से पहले का अर्धविसर्गसदृश ) का जिह्वामूल स्थान होता है।

अनुस्वार का नासिका स्थान होता है।

अतः अ, कवर्ग, ह एवं विसर्ग कण्ठ्य; इकार, चवर्ग, य एवं श तालव्य; ऋ, टवर्ग, र एवं ष मूर्धन्य; ऌ, तवर्ग, ल एवं स दन्त्य; ञ म ङ ण न—ये नासिक्य; ए, ओ कण्ठ्यतालव्य; ओ तथा औ कण्ठ्योष्ठ्य; व दन्त्योष्ठ्य तथा अनुस्वार नासिक्य भी कहे जाते हैं।

**यत्न इति।** वर्णों के उच्चारण के लिए जो यत्न होता है वह दो प्रकार का होता है—आभ्यन्तर ( भीतरी ) एवं बाह्य ( बाहरी )। उनमें से पहला अर्थात् आभ्यन्तर प्रयत्न जो होता है, वह स्पृष्ट, ईषत्स्पृष्ट, ईषद्विवृत, विवृत एवं संवृत के भेद से पाँच प्रकार का होता है। नाभि से प्रेरित होकर ऊपर

**ईषद्विवृतमूष्मणाम् । विवृतं स्वराणाम् । ह्रस्वस्यावर्णस्य प्रयोगे संवृतम् । प्रक्रियादशायां तु विवृतमेव ।**

---

ताल्वादि सम्यक् स्पृशन्ति तदा स्पृष्टता यदा ईषदेव स्पृशन्ति तदा ईषत्स्पृष्टता समीपावस्थानमात्रे संवृतता दूरस्थे विवृतता किञ्चिन्मात्रदूरस्थे ईषद्विवृततेति । तेन स्पृष्टः=जिह्वाग्रादीनां ताल्वादिस्थानेन सह सम्यक् स्पर्शः ईषत्स्पृष्टः= तेषामीषत्स्पर्शः संवृतः=समीपावस्थानमात्रम् । विवृतः=दूरे एवावस्थानम् । ईषद्विवृतः किञ्चिन्मात्रदूरेऽवस्थानमिति पञ्चावस्थाभिः पञ्चैव आभ्यन्तरप्रयत्नाः आभ्यन्तरप्रयतनानि वा । तत्र कः कस्येत्यपेक्षायामाह—**तत्रेति** । तत्र=तेषां मध्ये । स्पर्शानां=जिह्वाग्रोपाग्रमध्यमूलादिभिस्ताल्वादिस्थानं सम्यक् स्पृष्ट्वैव ये उच्चार्यन्ते तेषां वर्णानां कादारभ्य मपर्यन्तानां ञय्प्रत्याहारान्तर्गतानाम् । स्पृष्टं=तदाख्यम् । प्रयतनम्=आभ्यन्तरप्रयत्नः । अन्तःस्थानाम्=स्पर्शोष्म-मध्यगतानां यणां यवरलानाम् । ईषत्स्पृष्टं प्रयतनम् । ऊष्मणां=ऊष्मवर्णानाम् । शलां=शषसहानाम् । ईषद्विवृतं प्रयतनम् । स्वराणां=अचाम् । विवृतं प्रयत-नम् । ह्रस्वस्य=एकमात्रिकस्य । अवर्णस्य=अकारस्य । प्रयोगे=व्यवहारे । संवृतं प्रयतनम् । तस्यापि प्रक्रियादशायां=शास्त्रीयकार्यप्रवृत्तिसमये । तु= तद्विपरीतम् । विवृतं प्रयतनम् । एव=हि न तु संवृतमिति । तेनैव शास्त्रीय-प्रक्रियाभिः परिनिष्ठितरामादिशब्दानां प्रयोगे क्रियमाणे एव ह्रस्वस्यावर्णस्य संवृतत्वं शास्त्रीयकार्यप्रवृत्तिसमये तु विवृतत्वमेव । तस्यापि विवृतत्वेनैव आकारेण सह सावर्ण्यसम्भवाद् दण्ड आढकमित्यत्र पूर्वपरयोः सवर्णदीर्घैकादेशः सम्भवति ।

---

उठा वायु जब छाती आदि में टकराता हुआ चलता है तब उससे वर्णों की अभिव्यञ्जक ध्वनियाँ निकलती हैं । उससे पहले जीभ के अग्र, उपाग्र, मध्य एवं मूल भाग तालु आदि स्थान को यदि अच्छी तरह छू लेते हैं तब उसे स्पृष्ट कहा जाता है, यदि कुछ-कुछ ही छू लें तो ईषत्स्पृष्ट होगा, यदि केवल नजदीक में रहें तो संवृत कहा जाता है, दूर रहने पर विवृत कहा जाता है एवं कुछ ही दूर रहने पर ईषद्विवृत । उनमें से स्पर्श वर्णों का स्पृष्ट प्रयत्न होता है । अन्तःस्थ वर्णों का ईषत्स्पृष्ट प्रयत्न होता है । इसी तरह ऊष्म वर्णों का ईषद्विवृत प्रयत्न एवं स्वरों का विवृत प्रयत्न होता है । ह्रस्व अकार के प्रयोग में संवृत प्रयत्न होता है, किन्तु शास्त्रीय कार्य की प्रवृत्ति के समय में तो विवृत ही

**बाह्यप्रयत्नस्त्वेकादशधा-विवारः संवारः श्वासो नादो घोषोऽघोषोऽल्पप्राणो महाप्राण उदात्तोऽनुदात्तः स्वरितश्चेति। खरो विवाराः श्वासा अघोषाश्च। हशः संवारा नादा घोषाश्च। वर्गाणां प्रथमतृतीयपञ्चमाः यणश्चाल्पप्राणाः। वर्गाणां द्वितीयचतुर्थौ शलश्च महाप्राणाः।**

**कादयो मावसानाः स्पर्शाः। यणोऽन्तःस्थाः। शल ऊष्माणः। अचः**

---

यत्नस्य द्वितीयं भेदमाह—**बाह्येति**। बाह्यप्रयत्नः = यो बहिरेव बोध्यो भवति प्रयत्नः सः। तु = हि। एकादशधा = एकादशविधो भवतीति। तान् परिगणयति—**विवार इत्यादिना**। विवारः संवारः श्वासः नादः घोषः अघोषः अल्पप्राणः महाप्राणः उदात्तः अनुदात्तः स्वरितः। च = चकारः समुच्चयार्थः। तत्र केषां के प्रयत्ना इत्यपेक्षायामाह—**खर इति**। खरः = खर्प्रत्याहारान्तर्गतवर्णाः खफछठथचटतकपशषसाः। विवाराः = विवारप्रयत्नवन्तः। श्वासाः = श्वासप्रयत्नविशिष्टाः। अघोषाः = अघोषप्रयत्नविशिष्टाश्चेति। हशः = हश्वर्णाः—हयवरलञमङणनझभघढधजबगडदाः। संवाराः = संवारप्रयत्नवन्तः। नादाः = नादप्रयत्नविशिष्टाः। घोषाः = घोषप्रयत्नविशिष्टाश्चेति। **वर्गाणां** = कवर्गादिपञ्चवर्गाणाम्। प्रथमतृतीयपञ्चमाः=आद्यतृतीयपञ्चमवर्णाः—कगङाः चजञाः टडणाः तदनाः पबमाः। यणः = यण्वर्णाः यवरलाः। अल्पप्राणाः = अल्पप्राणप्रयत्नवन्तः। वर्गाणां = कादिवर्गाणाम्। द्वितीयचतुर्थौ = गणनाक्रमेण द्वितीयचतुर्थवर्णौ खघौ छझौ ठढौ थधौ फभौ च। शलः = शल्वर्णाः शषसहाः। महाप्राणाः = महाप्राणप्रयत्नवन्तः।

स्पर्शादयो ये उक्तास्तेषां परिचयमाह—**कादय इत्यादिना**। कादयः = क

---

होता है। ( वैसा न होने पर ह्रस्व अकार एवं आकार के प्रयत्न भिन्न हो जाने से सवर्णदीर्घ नहीं होगा। )

वाह्य प्रयत्न तो ग्यारह प्रकार का होता है—विवार, संवार, श्वास, नाद, घोष, अघोष, अल्पप्राण, महाप्राण, उदात्त, अनुदात्त एवं स्वरित। उनमें से खर्प्रत्याहार के वर्ण विवार, श्वास, अघोष प्रयत्न वाले होते हैं। हश् वर्ण संवार, नाद एवं घोष प्रयत्न वाले होते हैं। वर्ग के प्रथम, तृतीय एवं पाँचों वर्ण तथा यण् वर्ण अल्पप्राण प्रयत्न वाले होते हैं। वर्ग के दूसरे एवं चौथे वर्ण तथा शल् वर्ण महाप्राण प्रयत्न वाले होते हैं।

क से लेकर म तक के वर्ण स्पर्श वर्ण कहलाते हैं। यण् अर्थात् य व

**स्वराः। ≍क≍ख इति कखाभ्यां प्रागर्धविसर्गसदृशो जिह्वामूलीयः। ≍प ≍फ इति पफाभ्यां प्रागर्धविसर्गसदृश उपध्मानीयः। अं अः इत्यचः परावनुस्वरविसर्गौ।**

( ११ ) अणुदित्सवर्णस्य चाप्रत्ययः १।१।६९ ॥ **अविधीयमानोऽणु-**

---

आदि आदौ वा येषान्ते कादयः। मावसानाः = मः अवसाने येषान्ते ककरादारभ्य मकारपर्यंन्ता वर्गगतवर्णाः। स्पर्शाः=स्पर्शसंज्ञकाः भवन्तीति। यणः=यण्वर्णाः यवरलाः। अन्तःस्थाः=अन्तःस्थसंज्ञका भवन्ति। शलः=शल्वर्णाः शषसहाः। ऊष्माणः=ऊष्मसंज्ञका भवन्ति। अचः=अज्वर्णाः। स्वराः=स्वरसंज्ञका भवन्तीति। उदात्तानुदात्तस्वरितास्तु पूर्वमुक्ता एव। उक्तो यत्नः। सम्प्रति स्थानविवेके पठितान् कतिपयशब्दान् विवृणोति--≍क **इत्यादिना।** ≍क≍ख इति=इत्थम्। कखाभ्यां प्राक्=कखयोः पूर्वमवस्थितः। अर्धविसर्गसदृशः=उच्चारणे लेखने चार्धविसर्जनीयतुल्यः। जिह्वामूलीयः=तत्संज्ञकः। ≍प ≍फ इति=इत्थमपि। पफाभ्यां प्राक्=पफयोः पूर्वमवस्थितः। अर्धविसर्गसदृशः। उपध्मानीय इति। अं अः इति=इत्थम्। अचः=अज्वर्णात् परौ=परवर्तित्वेन स्थितौ। अनुस्वारविसर्गौ=आद्योऽनुस्वारपरः विसर्ग इति संज्ञिताविति।

अण्विति—अण् उदित् सवर्णस्य च अप्रत्ययः पञ्चपदमिदं सूत्रम्। अप्रत्ययः अण् उदित् सवर्णस्य च इत्यन्वयः। अप्रत्ययः=प्रतीयते विधीयते इति प्रत्ययः,

---

र ल—ये वर्ण अन्तःस्थ कहलाते हैं। शल् अर्थात् श ष स ह—ये वर्ण ऊष्म कहलाते हैं। अच् वर्ण स्वर कहलाते हैं।

≍क ≍ख ऐसे क एवं ख से पहले जो आधा विसर्ग के समान ( उच्चारण एवं लेखन में ) रहता है, वह जिह्वामूलीय कहलाता है। ≍प ≍फ इस तरह प एवं फ से पहले जो आधा विसर्ग के समान रहता है, वह उपध्मानीय कहलाता है। अं, अः ऐसे अच् परे रहने वाले जो वर्ण हैं, वे क्रम से अनुस्वार एवं विसर्ग कहलाते हैं।

( यद्यपि सवर्णसंज्ञा में बाह्य प्रयत्न का कोई काम नहीं है, फिर भी अन्तरतम के चयन में इनका उपयोग आवश्यक होने से इसकी भी जानकारी आवश्यक है। )

अणुदिदिति। विधान न किया जाने वाला अण् एवं उदित् ( उकार है इत्संज्ञक जिनके ऐसे ) भी सवर्ण की संज्ञा होती है। यहाँ अण् पर

**दिच्च सवर्णस्य संज्ञा स्यात्। अत्रैवाण् परेण णकारेण। कु चु टु तु पु एते उदिताः। तदेवम्–अ इत्यष्टादशानां संज्ञा। तथैवेकारोकारौ। ऋकारस्त्रिंशतः।**

---

न प्रत्ययः अप्रत्ययः, यस्य खलु विधानं क्रियते स प्रत्ययस्तद्भिन्नः अप्रत्ययः। अण्=अकारादारभ्य लण्सूत्रस्थ'ण्'कारपर्यन्तवर्णाः। उदित्—उत्=ह्रस्वोकारः, इत्=इत्संज्ञको यस्य स उदित्। सवर्णस्य=समानोच्चारणस्थानप्रयत्नस्य। च=स्वस्य च संज्ञा=ग्राहको भवति। प्रत्ययभिन्नः अण् उदित् च स्वस्य सवर्णस्य च ग्राहक इत्याशयः। **अविधीयमान इति**। अविधीयमानः=अभाव्यमानः, यः खलु न सूत्रेण विधीयते सः। विधीयमानः आदेशागमप्रत्ययरूपस्तद्भिन्न उद्देश्यभूतः अविधीयमान इति। अण्=अण्वर्णः, अकारादारभ्य लकारपर्यन्ता वर्णाः। उदित्=यस्य उत् इत्संज्ञको भवति सः, यथा कु चु टु तु पु एते। च=समुच्चयार्थः। सवर्णस्य=समानोच्चारणस्थानप्रयत्नवर्णस्य। संज्ञा=ग्राहकः। स्यात्। अत्र=अस्मिन् सूत्रे। एव=हि। अण्=अण्प्रत्याहारः। परेण=लण्सूत्रगतेन। णकारेण=इता णेन गृह्यत इति। कथ्यते हि सर्वे इण्ग्रहाः परेण णकारेण अण्ग्रहास्तु पूर्वेण किन्तु अणुदिदित्यत्र तु अण्ग्रहोऽपि परेणैव णकारेणेति।

कु चु टु तु पु एते=पञ्च। उदितः=उदिदिति कथिताः। यथा—कुहोश्चुः, ष्टुना ष्टुः, तोर्लि, अट्कुप्वाङ्नुम्व्यवायेऽपि इति। एतेऽपि भवन्ति सवर्णस्य ग्राहकाः स्वस्य च। तेन कु इति कादिपञ्चकग्राहकः। भाव्यमानोऽण् तु न सवर्णस्य ग्राहकः अपितु स्वस्यैव। तेन 'सनाशंसभिक्ष उः' इति उरेव भवति न तु ऊश्च। फलितमाह—**तदेवमिति**। तत्=तस्मात्। एवम्=इत्थम्। अ इति। अष्टादशानां=ह्रस्वदीर्घप्लुतोदात्तानुदात्तस्वरितानुनासिकाननु-

---

( लण् सूत्र ) के णकार से लिया जाता है। सभी जगह इण् पर के णकार से एवं अण् पूर्व के णकार से लिया जाता है, लेकिन यहाँ अण् भी पर के णकार से लिया जाता है। कु चु टु तु पु—ये उदित् हैं अर्थात् उकार की इत्संज्ञा वाले हैं। तो इस प्रकार से 'अ' यह अठ्ठारहों प्रकार के अ की संज्ञा है।

इसी तरह इकार एवं उकार भी। ऋकार तीस प्रकार की संज्ञा है ( अठ्ठारह ऋकार, बारह ऌकार—दोनों के सावर्ण्य से )। इसी तरह ऌकार भी। एच् बारहों की संज्ञा है। अर्थात् ए से बारह ही प्रकार के एकार लिये जाते हैं। इसी तरह ऐ, ओ, औ भी। ए, ऐ एवं ओ, औ की सवर्णसंज्ञा नहीं होती,

**एवं ऌकारोऽपि। एचो द्वादशानाम्। अनुनासिकानुनासिकभेदेन यवला द्विधा। तेनाननुनासिकास्ते द्वयोर्द्वयोः संज्ञा।**

(१२) परः सन्निकर्षः संहिता १।४।१०९॥ **वर्णानामतिशयितः सन्निधिः संहितासंज्ञः स्यात्।**

---

नासिकानाम्। संज्ञा भवति हि। तथा=एवम्। एव=हि। इकारोकारौ=इकार उकारश्चोभौ एव अष्टादशानामेव संज्ञा। ऋकारः=ऋवर्णः। त्रिंशतः=त्रिंशत एव संज्ञेति ऋकारस्याष्टादश भेदाः ऌकारस्य द्वादशेत्युभयोः सावर्ण्येन तथा। एवम्=तथैव। ऌकारः। अपि च त्रिंशत एव संज्ञा। एचः इति द्वादशानां संज्ञा इति। ए इति द्वादशानां तथैव ऐ ओ औ चेति। यवलाः=यकारवकारलकाराः। अनुनासिकानुनासिकभेदेन—अनुनासिकाः=मुखसहित-नासिकयोच्चार्यमाणाः, अननुनासिकाः=मुखमात्रेणोच्चार्यमाणा इति भेदेन। द्विधा=द्विप्रकाराः। तेन=हेतुना। अननुनासिकाः=आक्षरसमाम्नायिकाः। ते=यवलाः। द्वयोः द्वयोः=प्रत्येकमनुनासिकनिरनुनासिकयोः। संज्ञा=ग्राहक इति। रेफहकारयोस्तु सवर्णवर्णाभावेन स्वस्यैव संज्ञा। एवमण्प्रत्या-हारानन्तर्गतानामपि। एकारैकारयोः ओकारौकारयोश्च न सवर्णसंज्ञा, माहे-श्वरसूत्रे एओङ् ऐऔच् इति स्पष्टतः पृथगेव पाठात्।

**पर इति।** 'परः सन्निकर्षः संहिता' त्रिपदमिदं सूत्रम्। परः=अत्यन्तः अर्धमात्राधिककालव्यवधानरहितः तावत्कालव्यवधानस्यावर्जनीयत्वात्। सन्निकर्षः=सामीप्येनावस्थितिः। संहिता=संहितासंज्ञा भवति। **वर्णानामिति।** वर्णानाम्=अक्षराणाम् अकारादीनाम्। अतिशयितः=अत्यन्तः। सन्निधिः=

---

क्योंकि सूत्र में ही उनको पृथक् करके पढ़ा गया है। य व ल—ये तीन अनु-नासिक एवं अननुनासिक के भेद से दो प्रकार का होता है। इस कारण ये अननुनासिक जो हैं, वे दोनों की संज्ञा हैं। अर्थात् य से यँ का भी ग्रहण होता है। 'र' एवं 'ह' अण् प्रत्याहार के भीतर रहकर भी सवर्ण वर्ण के अभाव में अपनी ही संज्ञा हैं।

**पर इति।** वर्णों का अत्यन्त ( आधी मात्रा से अधिक व्यवधान न होने वाली ) समीपता संहिता कहलाती है। वर्णों का अत्यन्त सामीप्य संहिता है। जैसे—सुधी+उपास्य में धी का ईकार एवं उपास्य के उकार का। संहिता होने पर ही सभी सन्धिकार्य होते हैं।

( १३ ) हलोऽनन्तराः संयोगः १।१।७ ॥ **अज्भिरव्यवहिता हलः संयोग-संज्ञाः स्युः ।**

( १४ ) सुप्तिङन्तं पदम् १।४।१४ ॥ **सुबन्तं तिङन्तञ्च पदसंज्ञं स्यात् ।**

**इति संज्ञाप्रकरणम् ।**

---

समीपता, यत्र अर्धमात्राधिककालव्यवधानाभाव इति । संहितासंज्ञः = संहितेति संज्ञावान् । भवतीति । वर्णानामत्यन्तप्रत्यासत्तिः संहितेति भावः । यथा सुधी उपास्य इत्यत्र धीकारगतेकारस्य उपास्यगतोकारस्य च । संहितायामेव भवन्ति सन्धिकार्याणि नान्यथा ।

**हल इति ।** हलः अनन्तराः संयोगः त्रिपदमिदं सूत्रम् । अनन्तराः हलः संयोगः इत्यन्वयः । अनन्तराः = न विद्यते अन्तरं विजातीयेन व्यवधानं येषान्ते तादृशाः । हलः = हल्वर्णाः यथा स्त्री इत्यत्र सतराः । संयोगः = संयोगसंज्ञका इति । **अज्भिरिति ।** अज्भिः = अज्वर्णैः । अव्यवहिताः = अनन्तरिता अत एव संलग्नाः । हलः = हल्वर्णाः । संयोगसंज्ञाः = संयोगसंज्ञावन्तः । स्युः = भवेयुरिति । यथा अग्निरित्यत्र गनौ । संयोगे परे पूर्वोऽज्भवति गुरुः ।

**सुप्तिङन्तमिति ।** सुप्तिङन्तं पदं द्विपदमिदं सूत्रम् । सुप्तिङन्तं = सुप् च तिङ् च अन्ते = अवसाने यस्य तत् तादृशम् । पदं = पदसंज्ञकम् । भवतीति । **सुबन्तमिति ।** सुबन्तं—सुप् = सुप् इति प्रत्याहारः, सु इत्येतस्मादारभ्य सुप्-पर्यन्तविभक्ती आदाय स अन्ते = अवसाने, यस्य तत् तादृशं शब्दरूपं, यथा रामः रामौ इत्यादि । तिङन्तं = तिङ् इति प्रत्याहारः तिप् इत्येतस्मादारभ्य महिङ्-पर्यन्ताः विभक्ती आदाय स अन्ते = अवसाने यस्य तत् तादृशं शब्दरूपं, यथा

---

**हल इति ।** अच् वर्णों से व्यवधान न किये गये हल् वर्ण संयोग संज्ञा वाले होते हैं । संयोग परे रहने से पहले का अच् गुरु होता है ।

**सुप्तिङन्तमिति ।** जिसके अन्त में सुप् विभक्ति अथवा तिङ् विभक्ति हो, ऐसे को पदसंज्ञा होती है । सुप् प्रत्याहार है जो सु से लेकर सुप् तक की विभक्तियों के लेकर बनता है । तिङ् भी प्रत्याहार है, जो तिप् से लेकर महिङ् तक की विभक्तियों को लेकर बनता है । सुप् अन्त मे होने वाला सुबन्त; जैसे—रामः

## अथाच्सन्धिः

(१५) इको यणचि ६।१।७७ ।। **इकः स्थाने यण् स्यादचि संहितायां विषये । सुधी उपास्य इति स्थिते ।**

---

भवति भवतः इत्यादि । च = इत्युभयसमुच्चयार्थकः । पदसंज्ञं = पदसंज्ञावत् । स्यात् ।

अत्र संज्ञाप्रकरणे प्रत्याहाराः अचां भिदाः ।
इत्संज्ञा लोपसंज्ञा च ह्यनुनासिक एव च ।। १ ।।
सवर्णसंहितासंज्ञे संयोगः पदमेव च ।
निरूपिता यथायोगमष्टाध्यायीमतेन वै ।। २ ।।

**इति संज्ञाप्रकरणम्**

---

अथ पञ्चसन्धय उच्यन्ते । तत्र सन्धिर्नाम मेलनम् । तथा सति क्वचिद् वर्णस्य विकारो भवति क्वचिद् वर्णागमश्च क्वचित्तु यथास्थित्यवस्थानमपि । सन्धयः पञ्चोक्ताः—अच्सन्धिः, प्रकृतिभावः, हल्सन्धिः, विसर्गसन्धिः स्वादिसन्धिश्च । स्वरस्य स्वरेण सह सन्धिरच्सन्धिः, प्रकृतिभावस्तु यथास्थित्यवस्थानम्, व्यञ्जनस्य व्यञ्जनेन सह सन्धिर्हल्सन्धिः एवं विसर्गस्य व्यञ्जनेन सह सन्धिर्विसर्गसन्धिः, स्वादेः स्वरेणापि सह सन्धिः स्वादिसन्धिः । अथादौ अच्सन्धिर्निरूप्यते स्वराणां प्राधान्यात् । यणवादिगुणवृद्धिपररूपदीर्घपूर्वरूपसन्धयः प्रकृतिभावश्च अच्सन्धौ निरूप्यन्ते । गुणादिषु पूर्वपरयोः स्थाने एकादेशो भवति सर्वत्र संहिताऽपेक्षिता । तत्रादौ यण्सन्धिरुच्यते -- **इको यणचि इति** । इकः यण् अचि त्रिपदमिदं सूत्रम् । विधिसूत्रमिदम् । इकः = इति षष्ठ्यन्तं पदं तेन 'षष्ठी स्थानेऽयोगा' इति परिभाषया इकः स्थाने इति ( इक् इति इ उ ऋ ऌ इत्येते षष्ठ्यर्थः स्थाने

---

रामौ इत्यादि और तिङ् अन्त में रहने वाला तिङन्त है; जैसे—भवति भवतः आदि । केवल पदों का ही प्रयोग होता है, अपद का नहीं ।

इति संज्ञाप्रकरणम् ।

---

**इको यणचीति** । इक् अर्थात् इ उ ऋ ऌ के स्थान में यण् अर्थात् य व र ल हों, अच् के परे रहने से संहिता के विषय में । सुधी + उपास्यः इस स्थिति में 'इको यणचि' से जो यण् प्राप्त है वह धी के ईकार को आधार मानकर उपास्य

( १६ ) तस्मिन्निति निर्दिष्टे पूर्वस्य १।१।६६ ।। **सप्तमीनिर्देशेन विधीयमानं कार्यं वर्णान्तरेणाऽव्यवहितस्य पूर्वस्य बोध्यम् ।**

---

इति ) यण्=यवरलाः । इकां यणाञ्च साम्याद्यथासङ्ख्यम् । अचि=अजादौ परे । संहितायामित्यनुवर्तते । **इक इति** । इकः=इ उ ऋ ऌ इत्येतषाम् । स्थाने= तद्देशे । यण्=यवरलाः । स्यात् । अचि=अचि परतः । संहितायां विषये= यदि तत्र संहिता विद्यते । **सुधी इति** । सुधीभिः उपास्य इति विग्रहे समासे विभक्तिलुकि, सुधी उपास्य इति स्थिते, 'इको यणचि' इत्येनन प्राप्तो यण् किं धीगतेकारमाश्रित्य उपास्यगतोकारस्य भवति उत उपास्यगतोकारमाश्रित्य धीगतेकारस्य भवति इति सन्देहे—

**तस्मिन्निति** । तस्मिन् इति निर्दिष्टे पूर्वस्य चतुष्पदमिदं सूत्रम् । परिभाषा-सूत्रमिदम् । अनियमे नियमकारिणी भवति परिभाषा । तस्मिन् इति=सप्त-म्यन्तस्यानुकरणमिदम्, तेन सप्तम्यन्तपदेन यथा पूर्वसूत्रे अचीति । निर्दिष्टे= संसूचिते स्थले । पूर्वस्य=ततः प्राग्वर्तिन एव कार्यं न तूत्तरस्येति । **सप्तमीति** । सप्तमीनिर्देशेन=सप्तम्यन्तपदसम्बन्धेन । विधीयमानं=क्रियमाणम् । कार्यं= सन्ध्यादि । वर्णान्तरेण=अन्येन विजातीयेन सजातीयेन वा वर्णेन । अव्यव-हितस्य=अनाच्छादितस्य । पूर्वस्य=ततः प्राग्वर्तिनः स्थाने । बोध्यं=ज्ञेयम् । इति सूत्रे अचि इति सप्तम्यन्तपदनिर्देशेन विधानात् तत्पूर्वस्य वर्णान्तरेणा-व्यवहितस्य धीकारेकारस्य स्थाने एव यणि प्राप्ते ( न तु धीगतेकारमाश्रित्य

---

के उकार के स्थान में हो या उपास्य के उकार को आधार मानकर धी के ईकार के स्थान में हो, ऐसा सन्देह हो जाने पर—

**तस्मिन्निति** । सप्तमी के निर्देश से किया जाने वाला कार्य दूसरे वर्ण से अव्यवहित पूर्ववर्ती वर्ण के स्थान में होता है । इससे उपास्य के उकार से अव्यवहित रूप में पूर्ववर्ती होने के कारण धी के ईकार के स्थान में यण् प्राप्त हुआ । ( धकार व्यवहित होने के कारण पूर्ववर्ती होने पर धी के ईकार को परे मानकर सु के उकार के स्थान में एवं पकार से व्यवहित होने के कारण पा के आकार को परे मानकर उपास्य के उकार के स्थान में भी यण् नहीं हुआ । ) यण् अर्थात् य व र ल में से ई के स्थान में कौन आए ? इसका सन्देह होने पर—

**( १७ )** स्थानेऽन्तरतमः १।१।५० ॥ **प्रसङ्गे सति सदृशतम आदेशः स्यात् । सुध्य् उपास्य इति जाते ।**

**( १८ )** अनचि च ८।४।४७ ॥ **अचः परस्य यरो द्वे वा स्तो न त्वचि । इति धकारस्य द्वित्वेन सुध्ध्य् उपास्य इति जाते ।**

---

सुगतोकारस्य यण् प्राग्वर्तिनोऽपि तस्य वर्णान्तरेण धकारेण व्यवधानात् ) । ईकारस्य स्थाने यण्सु कतमः स्यादित्यपेक्षायाम्—

**स्थानेऽन्तरतम इति ।** स्थाने अन्तरतमः द्विपदमिदं सूत्रम् । परिभाषासूत्रमिदम् । स्थाने=स्थाने प्राप्यमाणानाम् । अन्तरतमः=सदृशतम आदेशः स्यात् इति । अतिशायितोऽन्तरः अन्तरतम इति । **प्रसङ्गे इति ।** प्रसङ्गे=एकाधिकप्राप्ते प्रसङ्गे । सति=विद्यमाने । सदृशतमः=प्राप्यमाणानां मध्ये यः अतिशायितः सदृशः स्थानप्रयत्नादिभिः तादृश एव । आदेशः स्यात् । स्थाने इत्यनुवृत्तौ पुनः स्थाने इति ग्रहणं 'यत्रानेकविधमान्तर्यं तत्र स्थानत आन्तर्यं बलीयः' इति ज्ञापनार्थम् । इति तालुस्थानीयस्येकारस्य स्थाने सदृशतमे यकारे, सुध् य् उपास्य इति जाते ( यद्यपि अत्र यथासङ्ख्यविधिनाऽपि ईकारस्य स्थाने यकार एव प्राप्नोति तथापि सूत्रपाठः ज्ञानाधिक्याय पुण्याय चेति तद्विदः ) ।

**अनचि चेति ।** 'अनचि च' द्विपदमिदं सूत्रम् । विधिसूत्रमिदम् । अनचि=अचारत्वाभावे । च=अचः परस्य यरो वा द्वे इति ।

**अच इति ।** अचः=अज्वर्णात् । परस्य=परतः स्थितस्य । यरः=यर्-वर्णस्य । द्वे । वा=विभाषया । स्तः । न तु अचि=अचि परे तु नेति । न अचि अनचि इति नायं पर्युदासोऽपि तु अचारे तु नेति प्रसज्यप्रतिषेधः । इति=अनेन । धकारस्य द्वित्वेन=द्विर्भावेन । सुध् ध् य् उपास्य इति जाते ।

---

**स्थानेऽन्तरतम इति ।** एक से अधिक की प्राप्ति का प्रसङ्ग रहने पर उनमें से स्थानी का जो सबसे निकटतम होता है वही आदेश होता है । अनेक प्रकार के आन्तर्य के आ जाने पर स्थान से होने वाला आन्तर्य बलवान् होता है । इससे तालुस्थानीय ई के स्थान में उसी जाति का य हुआ और 'सुध् य् उपास्यः' ऐसी स्थिति हो जाने पर—

**अनचि चेति ।** अच् से परे जो यर् है उसका विकल्प से द्वित्व हो, यदि उसके परे अच् न हो । इससे धकार के द्वित्व होने से 'सुध्ध्य् उपास्यः' हो जाने पर—

**( १९ ) झलां जश् झशि ८।४।५३ ॥ स्पष्टम् । इति पूर्वधकारस्य दकारः । सुद्ध्य् उपास्य इति जाते ।**

**( २० ) संयोगान्तस्य लोपः ८।२।२३ ॥ संयोगान्तं यत्पदं तस्य लोपः स्यात् ।**

**( २१ ) अलोऽन्त्यस्य १।१।५२ ॥ षष्ठीनिर्दिष्टोऽन्त्यस्याल आदेशः स्यात् । इति यलोपे प्राप्ते ( यणः प्रतिषेधो वाच्यः—वा० ) । सुद्ध्युपास्यः सुध्युपास्यः । मद्ध्वरिः मध्वरिः । धात्त्रंशः धात्रंशः । लाकृतिः ।**

---

**झलामिति** । 'झलां जश् झशि' त्रिपदमिदं सूत्रम् । विधिसूत्रमिदम् । झलां= झल्वर्णानां स्थाने, जश् = जश्वर्णाः स्युः । झशि=झश्वर्णे परे । इति पूर्वधकारस्य दकारे=धकारस्य झल्त्वेन परधकारे झशि परे जश्त्वे स्थानतः अन्तरतमतया धकारस्य स्थाने दकारे, सु द् ध् य् उपास्य इति जाते ।

**संयोगान्तस्येति** । 'संयोगान्तस्य लोपः' द्विपदमिदं सूत्रम् । संयोगान्तस्य— संयोगः अन्ते = अवसाने यस्य तस्य तादृशस्य पदस्य लोपः स्यात् । **संयोगान्तमिति** । संयोगान्तं = संयोगः अन्ते यस्य तादृशम् । यत् पदम् । तस्य = तादृशपदस्य । लोपः स्यात् । इति संयोगान्तपदस्य सुद् ध् य् इत्येतस्यैव लोपे प्राप्ते ।

**अलोऽन्त्यस्येति** । अलः अन्त्यस्य द्विपदमिदं सूत्रम् । परिभाषासूत्रमिदम् । अन्त्यस्य = अन्ते भवोऽन्त्यस्तस्य । अलः=स्थाने षष्ठीनिर्दिष्ट आदेशो भवतीति । **षष्ठीनिर्दिष्ट इति** । षष्ठीनिर्दिष्टः = षष्ठ्या व्यवस्थापितः । आदेशः । अन्त्यस्य = अन्ते स्थितस्य । अलः स्थाने । स्यादिति । इति = अनया परिभाषया संयोगान्तस्येति षष्ठ्या निर्दिष्टत्वादन्त्यस्यालो यकारस्य लोपे प्राप्ते ।

**यण इति** । यणः = यण्वर्णस्य यो लोपादेशस्तस्य, प्रतिषेधः = निषेधः ।

---

**झलामिति** । झल् के स्थान में जश् हो यदि उसके परे झश् वर्ण हो । इससे पूर्व धकार के दकार हो जाने पर 'सु द् ध् य् उपास्यः' हो जाने पर—

**संयोगान्तस्येति** । जिसके अन्त में वर्णों का संयोग हो ऐसे पद का लोप हो ।

**अलोऽन्त्यस्येति** । षष्ठी विभक्ति के द्वारा निर्दिष्ट जो आदेश है वह अन्त्य के अल् के स्थान में होता है । इससे यकार का लोप प्राप्त होने पर—

**यण इति** । यण् वर्णों का (लोप) निषेध हो । सुद्ध्युपास्यः, सुध्युपास्यः । मद्ध्वरिः, मध्वरिः । धात्त्रंशः, धात्रंशः । लाकृतिः ।

वाच्यः इति यलोपस्य निषेधे अज्झीना वर्णाः परं धावन्तीति दस्य धकारेण दयुक्तधस्य यकारेण तस्य उकारेण सह संयोगे सुद्ध्युपास्यः । द्वित्वस्य विभाषात्वेन द्वित्वाभावपक्षे सुध्युपास्यः । तदयं सङ्क्षेपः—सुधी उपास्य इति स्थिते, 'तस्मिन्निति निर्दिष्टे पूर्वस्ये'ति परिभाषामाधारीकृत्य 'इको यणचि' इति धीकारेकारस्य यणि प्राप्ते 'स्थानेऽन्तरतमः' इति परिभाषया ईकारस्य स्थाने यकारे, सुध् य् उपास्य इति जाते, धकारस्य 'अनचि च' इति द्वित्वे, पूर्वधकारस्य 'झलां जश् झशी'ति जश्त्वेन दकारे' सुद् ध् य् उपास्य इति जाते 'संयोगान्तस्य लोपः' इति सु द् ध् य् इति पदस्यैव लोपे प्राप्ते 'अलोऽन्त्यस्ये'ति परिभाषया अन्त्यस्यालो यकारस्य लोपे प्राप्ते 'यणः प्रतिषेधो वाच्यः' इति यलोपनिषेधे, वर्णानां

---

तो सङ्क्षेप में इस प्रकार कहें—

'सुधी उपास्यः' ऐसी स्थिति हैं। अच् के परे रहने पर इक् स्थान में 'इको यणचि' से यण् होना है। तो उपास्य के उकार को परे मानकर धी के ईकार के स्थान में यण् अथवा धी के ईकार को परे मानकर उपास्य के उकार के स्थान में यण् हो, ऐसा सन्देह होने पर 'तस्मिन्निति निर्दिष्टे पूर्वस्य' इस परिभाषा से पूर्व के अर्थात् धी के ईकार के स्थान में यण् प्राप्त हुआ। (धकार से व्यवहित होने के कारण सु के उकार का एवं पकार से व्यवहित होने के कारण उपास्य के उकार का यण् नहीं हुआ।)

उस पर ई के स्थान में यण् में कौन-सा वर्ण हो ? ऐसा सन्देह होने पर 'स्थानेऽन्तरतमः' इस परिभाषा से ई के तालुस्थानीय होने के कारण यणों में से तालुस्थानीय य हुआ और 'सु ध् य् उपास्यः' हो गया। धकार का 'अनचि च' से द्वित्व हो जाने पर 'सु ध् ध् य् उपास्यः' हो गया एवं 'झलां जशोऽन्ते' से पूर्व धकार का जश्त्व होने पर द होकर 'सु द् ध् य् उपास्यः' हो गया। तब 'संयोगान्तस्य लोपः' से संयोगान्त होने के कारण सुद्ध्य् का ही लोप प्राप्त होने पर 'अलोऽन्त्यस्य' इस परिभाषा से य् का ही लोप होना निश्चित होने पर 'यणः प्रतिषेधो वाच्यः' से यकार के लोप का निषेध हो गया एवं वर्णों के जुट जाने पर 'सुद्ध्युपास्यः' हो गया। द्वित्व न होने के पक्ष में 'सुध्युपास्यः' हो गया। इसी तरह 'मधु अरिः' ऐसी स्थिति में उकार का यण् होकर समानस्थानीय 'व्' हो गया तो 'म ध् व् अरिः' हो गया। तब धकार का द्वित्व, पूर्वधकार का जश्त्व से दकार, व के लोप का निषेध होने पर वर्णों के योग से मद्ध्वरिः। द्वित्व न होने के पक्ष में 'मध्वरिः' हो गया। इसी तरह 'धातृ

( २२ ) एचोऽयवायावः ६।१।७८ ॥ **एचः ( क्रमात् ) अय् अव् आय् आव् एते स्युरचि ।**

( २३ ) यथासङ्ख्यमनुदेशः समानाम् १।३।१० ॥ **समसम्बन्धी विधिर्यथासङ्ख्यं स्यात् । हरये । विष्णवे । नायकः । पावकः ।**

---

योगे सुद्ध्युपास्यः । द्वित्वाभावपक्षे सुध्युपास्यः इति । एवं मधु अरि इति स्थितेः, यणि वकारे, धस्य द्वित्वे, पूर्वधस्य जश्त्वेन दकारे, वलोपे प्राप्ते तन्निषेधे, मद्ध्वरिः । द्वित्वाभावपक्षे मध्वरिः । धातृ अंशः इति स्थिते, यणि रकारे, तकारस्य द्वित्वे, रलोपे प्राप्ते तन्निषेधे, धात्त्रंशः । द्वित्वाभावपक्षे धात्रंशः । ऌ आकृतिरिति स्थिते, यणि लकारे, लाकृतिरिति ।

अयादिसन्धिं निरूपयति—**एच इत्यादिना** । एचः अयवायावः द्विपदमिदं सूत्रम् । विधिसूत्रम् । एचः=इति षष्ठ्यन्तं पदं तेन 'षष्ठी स्थानेऽयोगा' इति एचः स्थाने । अयवायावः=अय् च अव् च आय् च आव् चेति ते । एतः अय्, ओतः अव्, ऐतः आय्, औतः आव् इति आदेशाः । स्युः । अचि इत्यनुवर्तते । **एच इति** । एचः=ए ओ ऐ औ इत्येतेषां स्थाने । ( क्रमात्=यथासङ्ख्यम् ) अय् अव् आय् आव् एते आदेशाः । स्युः । अचि=अचि परतः ।

**यथासङ्ख्यमिति** । यथासङ्ख्यम् अनुदेशः समानाम् त्रिपदमिदं सूत्रम् । समानाम् अनुदेशः यथासङ्ख्यम् ( भवति ) इत्यन्वयः । समानां=समसङ्ख्या-

---

अंशः' ऐसी स्थिति में ऋकार के स्थान में यण् होकर समानस्थानीय र्, तकार का द्वित्व, र् लोप का निषेध होने पर धात्त्रंशः । द्वित्व न होने के पक्ष में धात्रंशः हो गया । 'ऌ आकृतिः' ऐसी स्थिति में ऌ के स्थान में यण् होकर समानस्थानीय ल् हो गया एवं वर्णों के योग से लाकृतिः हो गया । ( इसमें अच् से परे न होने के कारण ल् का द्वित्व न हुआ एवं अन्त में संयोग न होने के कारण लोप प्राप्त न हुआ । ) इसी तरह दधि अत्र= दध्यत्र । मधु इह=मध्विह । इति एकः=इत्येकः आदि जान लेना चाहिए ।

**एचोऽयवायाव इति** । एच् अर्थात् ए ओ ऐ औ—इनके स्थान में अय् अव् आय् आव् ये आदेश हों अच् के परे रहने से ।

**यथासङ्ख्यमिति** । समान संख्या वाले हैं सम्बन्धी अर्थात् उद्देश्य ( जिनके स्थान में कुछ होना है ) और विधेय ( जो किसी के स्थान में किये जाते हैं ) जिसमें, ऐसी विधि क्रम के अनुसार ही प्रवृत्त होती है ।

( २४ ) वान्तो यि प्रत्यये ६।१।७९ ॥ **यकारादौ प्रत्यये परे ओदौतोरव् आव् एतौ स्तः । गव्यम् । नाव्यम् ।**

---

कानामुद्देशिनामनुदेशिनाञ्च । अनुदेशः स्थाने आदेशः । यथासङ्ख्यम् = अनुक्रमेण भवतीति । यत्र उद्देशिनोऽनुदेशिनश्च समसङ्ख्याकास्तत्रानुदेशोऽनुक्रमेण प्रवर्तत इति । समसम्बन्धी —समाः =तुल्यसङ्ख्याकाः, सम्बन्धिनः=उद्देश्या विधेयाश्च । ( यथा एचः अयादयश्च ) यत्र सः तादृशः । विधिः =आदेशादिः । यथासङ्ख्यम् =अनुक्रमेण । **स्यादिति ।**

**हरये**—हरे ए इति स्थिते, एगताचमाश्रित्य 'एचोऽयवायावः' इति हरे इत्यत्रत्यैकारस्थाने अयादीनां प्राप्तौ 'यथासङ्ख्यमनुदेशः समानामि'ति परिभाषया एचोऽपि चत्वारः अयादयोऽपि चत्वार एवेति उद्देश्यविधेययोः समसङ्ख्यात्वेन अनुक्रमेण विधेयानामयादीनां प्रवृत्तौ एकारस्य स्थाने क्रमप्राप्ते अयादेशे, हर् अय् ए इति जाते, वर्णानां योगे हरये ।

**विष्णवे**—विष्णो ए इति स्थिते, ओकारस्य स्थाने यथासङ्ख्यविधानेन 'एचोऽयवायावः' इति क्रमप्राप्ते अवादेशे, विष्ण् अव् ए इति जाते, वर्णानां योगे विष्णवे इति ।

**नायकः**—नै अकः इति स्थिते, यथासङ्ख्यविधानेन 'एचोऽयवायावः' इति ऐकारस्य स्थाने आयादेशे, न् आय् अक इति जाते, वर्णानां योगे नायकः ।

**पावकः**—पौ अकः इति स्थिते, यथासङ्ख्यविधानमाश्रित्य 'एचोऽयवायावः' इति औकारस्य स्थाने आवादेशे, प् आव् अक इति जाते, वर्णानां योगे पावकः इति ।

---

**हरये**—'हरे ए' ऐसी स्थिति में यथासंख्य विधि से 'एचोऽयवायावः' से हरे के एकार के स्थान में अय् हो जाने पर 'हर् अय् ए' हो गया, तब वर्णों के योग से 'हरये' हो गया । इसी तरह 'विष्णो ए' ऐसी स्थिति में यथासंख्य-विधि से विष्णो के ओकार के स्थान में 'एचोऽयवायावः' से अव् होने पर 'विष्ण् अव् ए' हो गया, तब वर्णों के योग से विष्णवे हो गया ।

**नायकः**—'नै अकः' ऐसी स्थिति में यथासङ्ख्य-विधि से 'एचोऽयवायावः' से नै के ऐकार के स्थान में आय् होने पर 'न् आय् अकः' हो गया और वर्णों के योग से नायकः हो गया ।

**पावकः**—'पौ अकः' ऐसी स्थिति में यथासङ्ख्य-विधि से 'एचोऽयवायावः' से पौ के औकार के स्थान में आव् होने पर 'प् आव् अकः' एवं वर्णों के योग से पावकः हो गया ।

( २५ ) अदेङ् गुणः १।१।२ ।। अत् एङ् च गुणसंज्ञः स्यात् ।

( २६ ) तपरस्तत्कालस्य १।१।७० ।। तः परो यस्मात्स च तात्परश्चोच्चार्यमाणः समकालस्यैव संज्ञा स्यात् ।

---

**वान्तो यि प्रत्यये** । वान्तः यि प्रत्यये त्रिपदमिदं सूत्रम् । यि प्रत्यये वान्त इत्यन्वयः । यि=यकारादौ । प्रत्यये=यदादौ प्रत्यये इति परे । वान्तः—वः= वकारः, अन्ते=अवसाने, यस्य तादृशः आदेश इति अर्थात् अयादिषु वान्त एव भवति इति ।

**यादाविति** । यादौ=यः आदिर्यस्य तादृशे । प्रत्यये । परे=परतः स्थिते । ओदौतोः=ओकारौकारयोः । क्रमेण अव् आव् । एतौ आदेशौ । स्तः इति ।

**गव्यम्**—गो य इति स्थिते, यस्य यादिप्रत्ययत्वेन तत्परे गो इत्येतस्य ओकारस्य स्थाने 'वान्तो यि प्रत्यये' इति अवादेशे, ग् अव् य इति जाते, वर्णानां योगे गव्य क्लीबत्वेन गव्यम् । **नाव्यम्**—नौ य इति स्थिते, औकारस्य स्थाने 'वान्तो यि प्रत्यये' इति आवादेशे, न् आव् य इति जाते, वर्णानां योगे नाव्य क्लीबत्वात् नाव्यम् ।

इतः परं गुणसन्धिर्निरूप्यते । गुणवृद्धिः पूर्वपररूपसन्धिषु 'एकः पूर्वपरयोः' इत्यधिक्रियते अर्थात् गुणादयः पूर्वपरयोः स्थाने एकादेशा एव ।

**अदेङ् गुण इति** । अत् एङ् गुणः त्रिपदमिदं सूत्रम् । संज्ञासूत्रम् । अत्= ह्रस्वाकारः । एङ्=एकारः ओकारश्च । गुणः=गुणसंज्ञकः । यत्रापि गुणशब्देनोच्यते तत्र अ ए ओ एतेषु स्थानमनुसृत्य कश्चित्प्रवर्तत इति ।

---

**वान्तो यि प्रत्यये**—यकार आदि में रहने वाले प्रत्यय के परे रहने पर ओ एवं औ के स्थान में अव् तथा आव् ये आदेश होते हैं ।

**गव्यम्**—'गो य' ऐसी स्थिति में य को निमित्त मानकर 'वान्तो यि प्रत्यये' से गो के ओकार के स्थान में अव् होने पर 'ग् अव् य' हो गया एवं वर्णों के योग से गव्य ( म् ) हो गया ।

**नाव्यम्**—'नौ य' ऐसी स्थिति में य को निमित्त मानकर 'वान्तो यि प्रत्यये' से नौ के औकार के स्थान में आव् आदेश होने पर 'न् आव् य' एवं वर्णों के योग से नाव्य ( म् ) हो गया ।

**अदेङ् गुण इति** । अत् ह्रस्व अकार एवं एङ् ( ए ओ ) गुण संज्ञा वाले होते हैं । अर्थात् अ ए ओ को गुणसंज्ञा होती है ।

( २७ ) आद् गुणः ६।१।८७ ।। **अवर्णादचि परे पूर्वपरयोरेको गुण आदेशः स्यात् । उपेन्द्रः । गङ्गोदकम् ।**

---

**तपरस्तत्कालस्येति** । तपरः तत्कालस्य द्विपदमिदं सूत्रम् । संज्ञासूत्रम् । तपरः—तः=तकारः परो यस्मात् स तादृशः वर्णः, यथा अत् । तत्कालस्य= तस्य काल इव कालो यस्य तस्य उच्चार्यमाणवर्णसममात्रिकस्य एव संज्ञेति ।

**तः पर इति** । तः=तकारः । परः=परवर्ती । यस्मात्=अणः । सः= तादृशः तपरः । च=एव । तात्=तवर्णात् । परः=परवर्ती । च=अपि । उच्चार्यमाणः समकालस्य=प्रोच्यमानवर्णतुल्यमात्रिकस्य । संज्ञा । स्यात् । न तु सवर्णस्य भिन्नकालस्यापि इति । तेन अत् इत्यकार एव न त्वाकारोऽपि कालवैभिन्न्यात् ।

**आद्गुण इति** । आत् गुणः द्विपदमिदं सूत्रम् । आदिति पञ्चम्यन्तं पदम् । अचि इत्यनुवर्तते । 'एकः पूर्वपरयोरि'ति च । आत्=अवर्णात् गुण इति ।

**अवर्णादिति** । अवर्णात्=अकारात् आकाराच्च । अचि परे=अचि परतः स्थिते । पूर्वपरयोः=पूर्ववर्तिपरवर्तिस्वरयोः स्थाने । एकः=द्वयोः स्थाने एक एव । गुणः=गुणसंज्ञकः । आदेशः । स्यात् । सोऽयमेकादेशः पूर्वस्य अन्तवत्पर-स्यादिवच्च भवति कार्ये । वर्णाश्रये तु न अन्तादिवत् । षत्वे तुकि च कर्तव्ये तु एकादेश एव असिद्ध इति ।

**उपेन्द्रः**—उप इन्द्रः इति स्थिते, उपगताकारस्य इन्द्रगतेकारस्य च स्थाने 'आद्गुणः' इति गुणैकादेशे, अकारस्य कण्ठस्थानीयत्वेन इकारस्य तालुस्थानीय-त्वेन च गुणेषु कण्ठतालुस्थानीयत्वेन एकारस्य सत्त्वात् तयोः स्थाने एकारैका-देशे, उप् एन्द्र इति जाते, योगे उपेन्द्र इति ।

---

**तपरस्तत्कालस्येति** । जिससे परे तकार है और जो तकार से परे है—दोनों ही उच्चार्यमाण वर्ण के समान काल वाले वर्ण की ही संज्ञा होती है ।

**आद्गुण इति** । अवर्ण से अच् के परे रहने से पूर्व एवं पर के स्थान में एक गुण आदेश होता है ।

**उपेन्द्रः**—'उप इन्द्रः' ऐसी स्थिति में उप के अकार से इन्द्र के इकार के परे रहने से दोनों के स्थान में 'आद्गुणः' से गुण हो जाने पर अ का कण्ठ स्थान एवं इ का तालु स्थान होने से गुण में से कण्ठ्य-तालव्य ए होकर 'उप्

( २८ ) उपदेशेऽजनुनासिक इत् १।३।२ । **उपदेशेऽनुनासिकोऽजित्संज्ञः स्यात् । प्रतिज्ञानुनासिक्याः पाणिनीयाः । लण्सूत्रस्थावर्णेन सहोच्चार्यमाणो रेफो रलयोः संज्ञा ।**

---

**गङ्गोदकम्**—गङ्गा उदकम् इति स्थिते, आकारादचि परे 'आद्गुणः' इति गुणे आकार-उकारयोः कण्ठोष्ठस्थानीयत्वेन गुणेषु कण्ठ्योष्ठ्ये ओकारे, आकार-उकारयोः स्थाने एकादेशे, गङ्ग् ओदकम् इति जाते, योगे गङ्गोदकमिति ।

**उपदेशेऽजिति** । उपदेशे अच् अनुनासिकः इत् चतुष्पदमिदं सूत्रम् । संज्ञा-सूत्रम् । उपदेशे='धातुसूत्रगणोणादिवाक्यलिङ्गानुशासनम् । आगमः प्रत्यया-देशा उपदेशाः प्रकीर्तिताः' ।। इति परिभाषिते आद्योच्चारणे । अनुनासिकः= मुखनासिकावचनः । अच् । इत्=इत्संज्ञक इति ।

**उपदेश इति** । उपदेशे=शास्त्रोपदेशावसरे आद्योच्चारणे । अनुनासिकः= अनुनासिकसंज्ञको मुखसहितनासिकावचनः । अच् । इत्संज्ञः=इत्संज्ञावान् । स्यादिति । **प्रतिज्ञेति** । पाणिनीयाः—पाणिनिना=तदाख्येन महामुनिना, प्रोक्तं पाणिनीयं व्याकरणशास्त्रं, तदधीते वेत्ति वा पाणिनीयस्ते । प्रतिज्ञानुनासिक्याः- प्रतिज्ञायते अभ्युपगम्यत इति प्रतिज्ञास्वीकारः, अनुनासिकस्य भावः आनुना-सिक्यं, प्रतिज्ञैव आनुनासिक्यं येषान्ते तादृशाः भवन्ति । अयमनुनासिक इति स्वीकारेणैव वर्णस्यानुनासिक्यं भवतीति भावः । ततः किमित्याह—**लणिति** । लण्सूत्रावर्णेन=लण्सूत्रगतेन अवर्णेन अनुनासिकत्वेन इत्संज्ञकेन सह आदिरन्तेन सहेता इति नियमेन । उच्चार्यमाणः । रेफः=रः इति 'उरण् रपरः' इति सूत्रगतः । रलयोः=रकारलकारयोः । संज्ञेति । र इति प्रत्याहारः रवर्णादारभ्य

---

ए न्द्र' एवं वर्णों के योग से उपेन्द्रः हो गया । यह एकादेश पूर्व का अन्त एवं पर का आदि दोनों माना जाता है, लेकिन वर्णाश्रय-विधि में नहीं ।

**गङ्गोदकम्**—'गङ्गा उदकम्' ऐसी स्थिति में 'आद्गुणः' से आकार एवं उकार के स्थान में दोनों के सजातीय ओ हो जाने से 'गङ्ग् ओ दकम्' एवं योग से गङ्गोदकम् हो गया ।

**उपदेश इति** । उपदेश में पढ़ा गया जो अनुनासिक अच् है, वह इत्संज्ञक होता है । पाणिनीय शास्त्र को मानने वाले स्वीकार से ही अनुनासिक मानने वाले होते हैं । लण् सूत्र में पढ़े गये अवर्ण के साथ उच्चार्यमाण र एवं ल दोनों की संज्ञा है अर्थात् र प्रत्याहार है । इसमें र एवं ल दोनों आ जाते हैं ।

**( २९ ) उरण् रपरः १।१।५१ । ऋ इति त्रिंशतः संज्ञेत्युक्तम् । तत्स्थाने योऽण् सः रपरः सन्नेव प्रवर्तते । कृष्णर्द्धिः । तवल्कारः ।**

---

इत्संज्ञक-अकारपर्यन्तगवर्णसमावेशेन अर्थात् रलयोर्ग्रहणेनेति । ( कथनमिदं कैयटानुरोधेन । नागेशादयस्तु नैतत्समर्थयन्ति । तन्मते लण्सूत्राकारोऽपि उच्चारणार्थ एव, यथा हकारादिषु । ) रपरसूत्रे रकारेण लकारग्रहणं तु ऋलृवर्णयोः सावर्ण्येनैव भवति । यदि तदभिमतं सूत्रकारस्य रप्रत्याहारस्तदा 'अतो लृान्तस्य' इत्यत्र रान्तस्य इत्येव पठेत्स लाघवात् । न ह्यन्यत्र क्वचिदपि रप्रत्याहारः प्रयुक्तो दृश्यते इति ।

**उरण् रपर इति ।** उः अण् रपर इति त्रिपदमिदं सूत्रम् । उः इति षष्ठ्यन्तं पदम्, ऋकारस्य स्थाने इत्यर्थः । अण्=य अण् भवति सः । रपरः=रः परो यस्मात् तथाभूतः प्रवर्तते इति ।

**ऋ इतीति ।** ऋः इति त्रिंशतः संज्ञा=ऋकारोऽष्टादशविधः लृकारश्च द्वादशविधः तयोर्मिथः सावर्ण्येन ऋकारस्त्रिंशत संज्ञा । इति । उक्तं=प्रतिपादितं प्राक् । तत्स्थाने—तस्य=त्रिंशत्प्रकारकस्य ऋकारस्य, स्थाने । यः अण्=अ इ उ इत्येते । सः=तादृशः । अण् । रपरः—रः=रकारः सावर्ण्याल्लकारश्च, यद्वा र इति प्रत्याहारः रलयोः सः परो यस्मात् तथा । सन्=विद्यमानः । एव=न तु केवलः । प्रवर्तते=प्रवृत्तो भवति इति ।

**कृष्णर्द्धिः ।** कृष्ण ऋद्धिः इति स्थिते, अकाराद् ऋकारे परे 'आद्गुणः' इति

---

**उरण् रपर इति ।** जो ऋ है वह तीस प्रकार की ही संज्ञा है, यह पहले ही कहा जा चुका है । ऋ के अठ्ठारह भेद एवं लृ के बारह तथा दोनों को मिलाकर तीस हो जाते हैं । उस तीस प्रकार के ऋ के स्थान में जो अण् होता है वह र ( र् एवं ल् ) से युक्त होकर प्रवृत्त होता है, अकेले नहीं ।

**कृष्णर्द्धिः**—'कृष्ण ऋद्धिः' ऐसी स्थिति में अकार से ऋकार के परे रहने के कारण 'आद्गुणः' से गुण होने पर गुणों में से अ का अन्तरतम होने के कारण ( क्योंकि गुणों में ऋ का अन्तरमत तो कोई नहीं है ) अ हो गया है । वह 'उरण् रपरः' से रकार पर वाला हो गया तो 'कृष्णर्द्धिः' हो गया । इसी तरह 'तव लृकारः' ऐसी स्थिति में 'आद्गुणः' से गुण होने पर अ एवं लृ के बदले अ एवं 'उरण् रपरः' से उसके ल् पर वाले हो जाने से तवल्कारः हो गया । इ का रपर होना जैसे—कृ–किरति । उ का—पृ–पूर्तम् आदि ।

( ३० ) लोपः शाकल्यस्य ८।३।१९ ॥ **अवर्णपूर्वयोः पदान्तयोर्यवयोर्लोपो वाऽशि परे।**

( ३१ ) पूर्वत्रासिद्धम् ८।२।१ ॥ **सपादसप्ताध्यायीं प्रति त्रिपाद्यसिद्धा, त्रिपाद्यामपि पूर्वं प्रति परं शास्त्रमसिद्धं स्यात्। हर इह हरयिह। विष्ण इह विष्णविह।**

---

गुणे, तत्र गुणे मूर्धस्थानीयस्य कस्याप्यभावात् अकारस्यान्तरतम्येन अकारऋकारयोः स्थाने अकारे जाते 'उरण् रपरः' इति अकारस्य रपरत्वे, कृष्ण् अर् द्धि इति जाते, योगे कृष्णर्द्धिः। एवं तव लृकारः इति स्थितौ, गुणे लपरत्वे, योगे तवल्कार इति। इकारस्य रपरत्वं यथा—गॄ-गिरति, उकारस्य यथा—पॄ-पूर्तम्।

**लोपः शाकल्यस्येति**। लोपः शाकल्यस्य द्विपदमिदं सूत्रम्। शाकल्यस्य= शाकल्यमतेन। लोपः=अपूर्वयोर्व्योर्लोप इति। अन्येषां मते नेति वैकल्पिकोऽयं विधिः।

अवर्णपूर्वयोः=अवर्णः पूर्वपरयोरिति तादृशयोः। पदान्तयोः=पदान्तस्थयोः। यवयोः=यकारवकारयोः। वा=विकल्पेन। लोपः=अदर्शनम्। अशि=अशवर्णे। परे=परतः स्थिते।

**पूर्वत्रासिद्धमिति**। पूर्वत्र असिद्धं द्विपदमिदं सूत्रम्। अधिकारसूत्रम्। पूर्वत्र=पूर्वस्मिन् हेतौ पूर्वस्य कार्ये कर्तव्ये परशास्त्रम्। असिद्धम्=अकृतवद् भवतीति। शास्त्रे हि अष्टौ अध्यायाः प्रत्यध्यायं चत्वारः पादाश्च। तत्र सपादसप्ताध्यायीविधौ कर्तव्ये अवशिष्टत्रिपादीविधिरसिद्धः त्रिपाद्यां च पूर्वत्र कर्तव्ये परः पर असिद्ध इति सूत्रार्थः।

**सपादेति**। सपादसप्ताध्यायीं=सप्तानामध्यायानां समाहारः सप्ताध्यायी, पादेन सहिता सपादा, सपादा चासौ सप्ताध्यायी सपादसप्ताध्यायी, ताम्। प्रति। त्रिपादी=त्रयाणां पादानां समाहारस्त्रिपादी। असिद्धा=अकृतेव। त्रिपाद्यां= त्रिपादीशास्त्रे। अपि। पूर्वं=पूर्वशास्त्रम्। प्रति। परम्=पश्चाद्वर्ति। शास्त्रम्

---

**लोपः शाकल्यस्येति**। पूर्व में अवर्ण होने वाले एवं पदान्त में रहे य एवं व का विकल्प से लोप हो अश् वर्ण के परे रहने से।

**पूर्वत्रासिद्धमिति**। अष्टाध्यायी में अष्टम अध्याय के प्रथम पाद सहित जो सप्ताध्यायी है उसके प्रति अवशिष्ट त्रिपादी ( अष्टम अध्याय के तीन पाद ) असिद्ध होते हैं एवं त्रिपादी में भी पूर्व-पूर्व के प्रति पर-पर शास्त्र असिद्ध

=विधिः । असिद्धम्=अकृतम् । स्यात् । भगवता हि अष्टाध्यायी प्रणीता । तत्राष्टमाध्यायस्य द्वितीयपादतः पूर्वं सपादसप्ताध्यायीति कथ्यते, तत उपरितनं तु त्रिपादीति ।

**हर इह हरयिह** । हरे इह इति स्थिते, एकारस्य स्थाने इकारे परे 'एचोऽयवायावः' इति यथासङ्ख्यविधिना अयादेशे, हरय् इह इति जाते, यकारस्य अपूर्वत्वेन अश्परत्वेन च 'लोपः शाकल्यस्ये'ति लोपे, हर इह इति जाते, अकारादिकारमाश्रित्य 'आद्गुणः' इति गुणे प्राप्ते 'पूर्वत्रासिद्धमि'ति 'आद्गुणः' इत्येतस्य प्रथमाध्यायगतत्वेन 'लोपः शाकल्यस्य' इत्येतस्य त्रिपादीगतत्वेन 'आद्गुणः' इत्येतस्य दृष्टचा लोपस्य 'पूर्वत्रासिद्धमि'ति असिद्धत्वेन गुणाभावे हर इह । यकारस्य लोपाभावपक्षे तु हरयिह इति । एवमेव **विष्ण इह विष्णविह**—विष्णो इह इति स्थिते, ओकारस्य अच्परत्वेन अवादेशे, वकारस्य 'लोपः शाकल्यस्य' इति लोपे, विष्ण इह इति जाते, अकारादिकारे परे 'आद्गुणः' इति गुणे प्राप्ते, वलोपस्य 'पूर्वत्रासिद्धमि'ति असिद्धत्वेन तदभावे, विष्ण इह । लोपाभावपक्षे विष्णविह ।

---

होता है । पाणिनीय शास्त्र में आठ अध्याय होने के कारण वह अष्टाध्यायी कहलाता है । उनमें से यह सूत्र आठवें अध्याय के द्वितीय पाद का प्रथम सूत्र है । उस शास्त्र में सात अध्याय एवं अष्टम अध्याय के प्रथम पाद को सपादसप्ताध्यायी कहा गया है और अष्टम अध्याय के तीन पादों को त्रिपादी । सपादसप्ताध्यायी की विधि हेतु त्रिपादी असिद्ध होते हैं और त्रिपादी में भी पूर्व के लिए पर-विधि ।

**हर इह, हरयिह**—'हरे इह' इस स्थिति में एकार के स्थान में 'एचोऽयवायावः' से अय् आदेश होने पर 'हरय् इह' हो गया, तब अवर्ण पूर्व होने एवं अश् के परे होने से 'लोपः शाकल्यस्य' से यकार का लोप हो गया, तब 'हर इह' रह जाने पर 'आद्गुणः' से गुण के प्राप्त होने पर पूर्वत्रासिद्धम्' से 'आद्गुणः' की दृष्टि में 'लोपः शाकल्यस्य' से किये गये य-लोप के असिद्ध हो जाने पर गुण के न हो पाने से हर इह हुआ । य-लोप के अभाव-पक्ष में हरयिह ।

**विष्ण इह, विष्णविह**—'विष्णो इह' ऐसी स्थिति में ओकार के स्थान में 'एचोऽयवायावः' से अव् आदेश होने पर 'विष्णव् इह' हुआ, वकार का 'लोपः शाकल्यस्य' से लोप होने पर 'विष्ण इह' हुआ, उस पर 'आद्गुणः' की दृष्टि में 'पूर्वत्रासिद्धम्' से य-लोप के असिद्ध होने के कारण गुण न हो पाने से 'विष्ण इह' हो गया । व लोप के अभाव के पक्ष में विष्णविह हुआ ।

**( ३२ ) वृद्धिरादैच् १।१।१ ।। आदैच्च वृद्धिसंज्ञः स्यात् ।**

**( ३३ ) वृद्धिरेचि । ६।१।८ ।। आदेचि परे वृद्धिरेकादेशः स्यात् । गुणापवादः । कृष्णैकत्वम् । गङ्गौघः । देवैश्वर्यम् । कृष्णौत्कण्ठ्यम् ।**

---

**वृद्धिरादैच् इति।** वृद्धिः आत् ऐच् त्रिपदमिदं सूत्रम् । आत् ऐच् वृद्धिः इति । आत्=आकारः । ऐच्=ऐ औ इत्येतौ च । वृद्धिः=वृद्धिसंज्ञकः । **आदैजिति ।** आत्=आकारः द्विमात्रिकः तपरस्तत्कालस्येति नियमेन । ऐच्=ऐज्वर्णः ऐ औ इति । वृद्धिसंज्ञः=वृद्धिशब्देन आ ऐ औ इत्येते गृह्यन्ते इति ।

**वृद्धिरेचीति ।** वृद्धिः एचि द्विपदमिदं सूत्रम् । आदित्यनुवर्तते । एचि=एज्वर्णे परे । वृद्धिः=पूर्वपरयोः स्थाने वृद्धिरेकादेशः । **आदेचीति ।** आत्=इति पञ्चम्यन्तं पदं तेन अवर्णात् । एचि=एज्वर्णे । परे=परतः स्थिते । वृद्धिः एकादेशः=पूर्वपरयोः स्थाने वृद्धिसंज्ञक एकादेश इति । **गुणेति ।** वृद्धिर्हि गुणापवादः—गुणस्य='आद्‌गुणस्ये'ति विहितस्य गुणैकादेशस्य, अपवादः=बाधकः ।

**कृष्णैकत्वम्**—कृष्ण एकत्वम् इति स्थिते, अकारादचि परे 'आद्‌गुणः' इति गुणे प्राप्ते, एच्परत्वेन परशास्त्रत्वेन च तं बाधित्वा 'वृद्धिरेचि' इति पूर्वपरयोरकारैकारयोः स्थाने वृद्ध्यैकादेशे, कृष्णगताकारस्य कण्ठस्थानीयत्वेन एकारस्य कण्ठतालुस्थानीयत्वेन वृद्धिसंज्ञकेषु कण्ठ्यतालव्ये ऐकारे, वर्णानां योगे कृष्णैकत्वमिति ।

**गङ्गौघः**—गङ्गा ओघ इति स्थिते आदचि परे 'आद्‌गुणः' इति गुणे प्राप्ते, तं बाधित्वा एच्परत्वेन 'वृद्धिरेची'ति वृद्धौ, वृद्धिसंज्ञकेषु कण्ठ्योष्ठ्यत्वेन पूर्वपरयोः स्थाने औकारे, योगे गङ्गौघः इति ।

---

**वृद्धिरादैजिति ।** आकार एवं ऐ औ को वृद्धिसंज्ञा होती है ।

**वृद्धिरेचीति ।** अवर्ण से एज्वर्ण परे रहने से वृद्धि एकादेश हो । यह गुण का अपवाद है ।

**कृष्णैकत्वम्**—'कृष्ण एकत्वम्' ऐसी स्थिति में 'आद्‌गुणः' से प्राप्त गुण को बाध कर एज्वर्ण परे होने के कारण 'वृद्धिरेचि' से वृद्धि हुई और वृद्धिसंज्ञकों में से कण्ठ्यतालव्य होने के कारण अ एवं ए के स्थान में ऐ हुआ तथा वर्णों के योग से 'कृष्णैकत्वम्' हो गया ।

**गङ्गौघः**—'गङ्गा ओघः' ऐसी स्थिति में 'आद्‌गुणः' से प्राप्त गुण के

( ३४ ) उपसर्गाः क्रियायोगे १।४।५९ ॥ प्रादयः क्रियायोगे उपसर्गसंज्ञाः स्युः । प्र परा अप सम् अनु अव निस् निर् दुस् दुर् वि आङ् नि अधि अपि अति सु उद् अभि प्रति परि उप एते प्रादयः ।

( ३५ ) भूवादयो धातवः १।३।१ ॥ क्रियावाचिनो भ्वादयो धातुसंज्ञाः स्युः ।

---

**देवैश्वर्यम्**—देव ऐश्वर्यम् इति स्थिते, गुणापवादेन 'वृद्धिरेची'ति वृद्धौ, कण्ठ्यतालव्यत्वेन पूर्वपरयोः स्थाने ऐकारे, देवैश्वर्यमिति ।

**कृष्णौत्कण्ठ्यम्**—कृष्ण औत्कण्ठ्यम् इति स्थिते, 'आद्गुणः' इति प्राप्तं गुणं बाधित्वा एच्परत्वेन 'वृद्धिरेची'ति वृद्धौ, वृद्धिषु कण्ठ्यौष्ठ्यत्वेन पूर्वपरयोः स्थाने औकारे, योगे कृष्णौत्कण्ठ्यमिति ।

**उपसर्गा इति** । उपसर्गाः क्रियायोगे द्विपदमिदं सूत्रम् । प्रादय इत्यनुवर्तते । **प्रादय इति** । प्रादयः=वक्ष्यमाणाः प्रादयः । क्रियायोगे=क्रियया सह योगे । उपसर्गसंज्ञाः=उपसर्गसंज्ञावन्तः । स्युः । क्वचित् प्रादिषु उद् इत्यस्य स्थाने उत् इति पाठः । सूत्रे 'उदः स्थास्तम्भोः पूर्वस्य' इति पाठाद् उद् एव पाठो युक्तः ।

**भूवादय इति** । भूवादयः धातवः द्विपदमिदं सूत्रम् । संज्ञासूत्रम् । भूवादयः= भूश्च वाश्च भूवौ, आदिः प्रभृतिश्च आदिः प्रकारश्च आदी, भूवौ आदी येषान्ते

---

अपवाद के रूप में एज्वर्ण परे होने से 'वृद्धिरेचि' से वृद्धि हुई और वृद्धिसंज्ञकों में से कण्ठ्यौष्ठ्य होने के कारण आ एवं ओ के स्थान में औ होकर 'गङ्गौघः' हो गया ।

**देवैश्वर्यम्**—'देव ऐश्वर्यम्' ऐसी स्थिति में 'आद्गुणः' से प्राप्त गुण को बाधकर एच् वर्ण परे होने के कारण वृद्धि हुई और कण्ठ्यौष्ठ्य होने के कारण अ एवं ऐ के स्थान में ऐकार हो गया तथा वर्णों के योग से 'देवैश्वर्यम्' हो गया ।

**कृष्णौत्कण्ठ्यम्**—'कृष्ण औत्कण्ठ्यम्' ऐसी स्थिति में 'आद्गुणः' से प्राप्त गुण के अपवादस्वरूप 'वृद्धिरेचि' से वृद्धि होने पर अ एवं औ के स्थान में कण्ठ्यौष्ठ्य 'औ' हो गया और योग से 'कृष्णौत्कण्ठ्यम्' हो गया ।

**उपसर्गाः क्रियायोग इति** । प्र आदि जो निपात हैं वे क्रिया के योग में उपसर्ग कहलाते हैं । ये प्र आदि बीस हैं ।

**भूवादय इति** । होना आदि क्रिया के वाचक भू आदि शब्द धातु कहलाते हैं ।

( ३६ ) उपसर्गादृति धातौ ६।१।९१ ।। **अवर्णान्तादुपसर्गादृकारादौ धातौ परे वृद्धिरेकादेशः स्यात् । प्रार्च्छति ।**

---

भूवादयः, भूप्रभृतयो वा सदृशा इत्येके । अपरे तु भूरादिर्येषान्ते भूवादयः, इक्‍ यण्भिर्व्यवधानं व्याडिगालवयोरिति वागमः । भू इत्येवमादयः शब्दाः क्रिया- वचनाः । धातवः=धातुसंज्ञकाः । तेन धातुत्वे भ्वादिशब्दवाच्यत्वं क्रियावाचि त्वञ्चोभे विवक्षिते । अतो वर्जनक्रियावाचिनो 'हिरुक्' इत्यस्य न धातुत्वमिति ।

**क्रियावाचिन इति ।** क्रिया=आश्रितक्रमा भवनपचनादिका, तस्या वाचिनः=वाचकाः । भ्वादयः=भूः आदिर्येषान्ते तादृशाः धातुपाठपठिता शब्दाः । धातुसंज्ञाः=धातुसंज्ञयाऽभिहिताः । स्युः ।

**उपसर्गादिति ।** उपसर्गात् ऋति धातौ त्रिपदमिदं सूत्रम् । आदिति वृद्धि रिति चानुवर्तते । उपसर्गात्=अवर्णान्तादुपसर्गात् । ऋति=ह्रस्व-ऋकारादौ धातौ परे वृद्धिरिति ।

**अवर्णान्तादिति ।** अवर्णान्तात्—अवर्णः अन्ते=अवसाने, यस्य तस्मात् तादृशात् । उपसर्गात्=प्रादितः । ऋकारादौ=ऋकार आदौ यस्य तस्मिन् तथाभूते । धातौ=धातुरूपे । परे=परतः स्थिते । वृद्धिः एकादेशः=पूर्वपरयोः स्थाने वृद्ध्येकादेशः । स्यात् ।

**प्रार्च्छति**—प्र ऋच्छति इति स्थिते, अवर्णाद् ऋकारे परे 'आद्गुणः' इति गुणे प्राप्ते, तं परत्वेन बलीयस्त्वेन च बाधित्वा प्र इत्येतस्य ऋच्छतीति क्रियया सह योगेन उपसर्गसंज्ञायाम्, ऋच्छ इत्येतस्य च 'भूवादयो धातवः' इति धातु- संज्ञायाम् 'उपसर्गादृति धातौ' इति पूर्वपरयोः स्थाने वृद्ध्यैकादेशे, आन्तरतम्याद् आकारे 'उरण् रपरः' इति रपरत्वे प्रार्च्छति इति ।

---

**उपसर्गादृतीति ।** अवर्ण अन्त में होने वाले उपसर्ग से ऋकार आदि वाले धातु के परे रहने से वृद्धि एकादेश होता है ।

**प्रार्च्छति**—'प्र ऋच्छति' इस स्थिति में 'आद्गुणः' से प्राप्त गुण के अपवाद के रूप में प्र को ऋच्छति के योग में 'प्रादयः क्रियायोगे' से उपसर्ग संज्ञा होने से एवं ऋच्छति के ऋच्छ को 'भूवादयो धातवः' से धातुसंज्ञा होने से 'उपसर्गा- दृति धातौ' से वृद्धि होने पर प्र का अकार एवं ऋच्छति के ऋकार के स्थान में अन्तरतम होने से आ हो गया और उसका 'उरण् रपरः' से रपर होने से 'प्रार्च्छति' हो गया ।

( ३७ ) एङि पररूपम् ६।१।९४ ॥ आदुपसर्गादेङादौ धातौ परे पररूप-
मेकादेशः स्यात् । प्रेजते । उपोषति ।

( ३८ ) अचोऽन्त्यादि टि १।१।६४ ॥ अचां मध्ये योऽन्त्यः स आदि-

---

**एङीति** । एङि पररूपम् द्विपदमिदं सूत्रम् । आदिति उपसर्गादिति धातौ
इति चानुवर्तते । एङि=एङादौ धातौ । पररूपं=पररूपमेकादेश इति ।

**आदुपसर्गादिति** । आत्=अवर्णान्तात् । उपसर्गात्=प्रादितः । एङादौ—
एङ्=एङ्वर्ण आदौ यस्य तस्मिन् तादृशे । धातौ=धातुसंज्ञके शब्दे । परे=
परतः स्थिते । पररूपम्=परस्य रूपवद्रूपं यत्र तत् तदाख्यम् । एकादेशः ।
स्यात् ।

**प्रेजते**—प्र एजते इति स्थिते 'आद्गुणः' इति प्राप्तं गुणं परत्वात् बाधित्वा
एजादित्वेन 'वृद्धिरेचि' इति वृद्धौ प्राप्तायां, तस्या अपि अपवादरूपेण प्र इत्येतस्य
एजते इति क्रियया योगेन उपसर्गसंज्ञात्वात् एजते इत्यत्रत्यस्य एज इत्येतस्य
धातुसंज्ञात्वाच्च एङादित्वेन च 'एङि पररूपमि'ति पररूपैकादेशेन अकारैकारयोः
स्थाने एकारे योगे च प्रेजते इति ।

**उपोषति**—उप ओषति इति स्थिते, 'आद्गुणः' इति प्राप्तं गुणं बाधित्वा
'वृद्धिरेची'ति एच्परत्वेन प्राप्तां वृद्धिमपि बाधित्वा उप इत्येतस्य उपसर्गसंज्ञा-
त्वात् ओषति इत्येतस्य धातुरूपत्वात् 'एङि पररूपमि'ति पररूपैकादेशेन अकारौ-
कारयोः स्थाने ओकारे, योगे उपोषति ।

**अचोऽन्त्यादीति** । अचः अन्त्यादि टि त्रिपदमिदं सूत्रम् । अचः=सन्निविष्टा-

---

**एङि पररूपमिति** । अवर्ण अन्त में होने वाले उपसर्ग से परे एङ् ( ए ओ )
आदि में होने वाले धातु के रहने पर पररूप एकादेश होता है ।

**प्रेजते**—'प्र एजते' ऐसी स्थिति में 'आद्गुणः' से प्राप्त गुण को बाधकर
'वृद्धिरेचि' से प्राप्त वृद्धि को भी बाधकर प्र की उपसर्गसंज्ञा हुई, एजते के एज
की धातुसंज्ञा होने के कारण 'एङि पररूपम्' से पररूप हुआ एवं दोनों के
स्थान में एकार के हो जाने से '**प्रेजते**' हो गया ।

**उपोषति**—'उप ओषति' ऐसी स्थिति में 'आद्गुणः' से प्राप्त गुण को
बाध कर 'वृद्धिरेचि' से प्राप्त वृद्धि को बाधकर उप के उपसर्ग एवं ओषति के
धातुरूप होने से 'एङि पररूपम्' से पररूप होकर दोनों के स्थान में ओकार
हुआ एवं 'उपोषति' हो गया ।

**र्यस्य तट्टिसंज्ञं स्यात् । शकन्ध्वादिषु पररूपं वाच्यम् ( वा० ) । तच्च टेः।**
**शकन्धुः । कर्कन्धुः । मनीषा । आकृतिगणोऽयम् । मार्तण्डः ।**

---

नामचां मध्य । अन्त्यादिः = अन्त्यः योऽन्ते स्थितः स आदिः यस्य तत् तादृ
खण्डम् । टिः = टिसंज्ञः । **अचामिति** । अचां=सन्निविष्टानामज्वर्णानाम् । मध्ये
यः । अन्त्यः = अन्ते स्थितः सः = अन्त्याच् आदिः यस्य = भागस्य । तत् =
तादृशमङ्गम् । टिसंज्ञं = टिसंज्ञकम् । स्यात् । यथा मनस् इत्यत्र अस् इ
टिसंज्ञः, दधि इत्यत्र इकार एव ।

**शकन्ध्वादिष्विति** । शकन्ध्वादिषु = शकन्धुः आदिर्येषान्ते तादृशेषु । परर
=परस्य रूपमिव रूपम् । वाच्यम् । **तदिति** । तत् पररूपम् । च = हि । टेः =
टिसंज्ञकस्य ।

**शकन्धुः**—शक अन्धुः इति स्थिते, प्राप्तं सवर्णदीर्घं बाधित्वा 'शकन्ध्वादि
पररूपं वाच्यमि'ति पररूपैकादेशेन उभयोरकारयोरकारे, शकन्धुः इति ।

**कर्कन्धुः**—कर्क अन्धुः इति स्थिते, प्राप्तं सवर्णदीर्घं बाधित्वा 'शकन्ध्वादि
पररूपं वाच्यमि'ति पररूपे, कर्कन्धुरिति ।

**मनीषा**—मनस् ईषा इति स्थितौ, 'शकन्ध्वादिषु पररूपं वाच्यमि'
टिभागस्य असः पररूपे, मनीषा ।

**आकृतीति** । अयं = शकन्ध्वादिः । आकृतिगणः—आकृत्या = एवञ्ज
तीयकतया निर्णीतव्यो गण इति । लोकप्रयोगानुसारेण एवञ्जातीयकाः शब्द

---

**अचोऽन्त्यादीति** । अचों में से जो अन्त वाला है, वह है आदि में जिसक
ऐसा भाग टिसंज्ञा वाला होता है । अर्थात् 'टि' से अन्त्य अच् सहित उस
बाद के वर्ण लिये जाते हैं । जैसे मनस् में अस् भाग 'टि' है और शक में 'अ'

**शकन्ध्वादिष्विति** । शकन्धु आदि शब्दों में पररूप हो । वह पररूप 'टि
का होता है ।

**शकन्धुः**—'शक अन्धुः' ऐसी स्थिति में प्राप्त सवर्णदीर्घ को बाधक
'शकन्ध्वादिषु पररूपं वाच्यम्' से पररूप हो गया और दोनों अ के स्थान
अ के आ जाने से 'शकन्धुः' हो गया ।

**कर्कन्धुः**—'कर्क अन्धुः' ऐसी स्थिति में सवर्णदीर्घ को बाधकर 'शकन्ध्व
दिषु पररूपं वाच्यम्' से पररूप हुआ और 'कर्कन्धुः' हो गया ।

**मनीषा**—'मनस् ईषा' ऐसी स्थिति में मनस् के टि भाग अस्
'शकन्ध्वादिषु पररूपं वाच्यम्' से पररूप होने पर 'मनीषा' हो गया ।

( ३९ ) अकः सवर्णे दीर्घः ६।१।१०१ ।। **अकः सवर्णेऽचि ( कि ) परे पूर्वपरयोर्दीर्घ एकादेशः स्यात् । दैत्यारिः । श्रीशः । विष्णूदयः । होतॄकारः ।**

---

गणेऽस्मिन् निवेशनीयाः, न हि ते नामतः परिगणयितुं शक्या अनेकत्वादिति । यथा—मार्तण्डः ।

**मार्तण्डः**—'मृतमण्डमस्ये'ति विग्रहे समासे, विभक्तिलुकि, मृत अण्ड इति स्थिते, शकन्ध्वादित्वेन पररूपे, मृतण्डः इति । तस्यापत्यं पुमानिति अणि, आदिपदवृद्धौ, मार्तण्डः इति ।

दीर्घसन्धिमुपन्यस्यति—**अकः सवर्णे दीर्घ इति** । त्रिपदमिदं सूत्रम् । अकः= अग्वर्णात् अ इ उ ऋ ऌ इत्येतस्मात् । पञ्चम्यन्तपदमिदम् । सवर्णे=तुल्यास्य-प्रयत्ने वर्णे अकीति परे । दीर्घः=पूर्वपरयोः स्थाने दीर्घैकादेशः, सोऽपि पूर्वस्या-न्त्यवत् परस्यादिवद् वर्णाश्रयविधिवर्जम् । **अक इति** । अकः=अग्वर्णात् । सवर्णे =तुल्यास्यप्रयत्ने । अचि=स्वरवर्णे अकीति । परे=परतः स्थिते । पूर्वपरयोः =पूर्ववर्तिनः परवर्तिनश्च स्थाने षष्ठयन्तपदत्वात् । दीर्घ एकादेशः । स्यात् ।

**दैत्यारिः**—दैत्य अरिः इति स्थिते, दैत्यगताकारात्सवर्णे अरिगताकारे परे 'अकः सवर्णे दीर्घः' इति द्वयोः स्थाने दीर्घैकादेशेन आन्तरतम्यादाकारे योगे च, दैत्यारिः इति ।

**श्रीशः**—श्री ईशः इति स्थिते, यणं बाधित्वा अकः सवर्णाक्परत्वेन द्वयोरी-कारयोः स्थाने 'अकः सवर्णे दीर्घः' इति दीर्घैकादेशे, श्रीशः इति ।

---

यह शकन्धु आदि गण आकृति अर्थात् स्वरूप से जाना जाने वाला है । लोक-व्यवहार के प्रयोगों को देखकर ऐसे शब्दों को इस गण में समाविष्ट मान लेना चाहिए ।

**मार्तण्डः**—'मृत अण्डः' ऐसी स्थिति में सवर्णदीर्घ को बाधकर 'शकन्ध्वादिषु पररूपं वाच्यम्' से पररूप हुआ एवं मृतण्ड हो गया और उससे अण् एवं आदि-वृद्धि से 'मार्तण्डः' हो गया ।

**अकः सवर्णे दीर्घ इति** । अक् वर्णों से सवण अच् अर्थात् अक् के परे रहने पर पूर्व एवं पर के स्थान में दीर्घ एकादेश होता है ।

**दैत्यारिः**—'दैत्य अरिः' ऐसी स्थिति में अक् से सवर्ण अक् के परे होने से 'अकः सवर्णे दीर्घः' से दीर्घ एकादेश होने पर पूर्व एवं पर के स्थान में आकार होकर 'दैत्यारिः' हो गया ।

( ४० ) एङः पदान्तादति ६।१।१०९ ॥ **पदान्तादेङोऽति परे पूर्वरूपमेकादेशः स्यात् । हरेऽव । विष्णोऽव ।**

---

**विष्णूदयः**—विष्णु उदयः इति स्थिते, यणं बाधित्वा अकः सवर्णाक्परत्वेन पूर्वपरयोरुकारयोः स्थाने 'अकः सवर्णे दीर्घः' इति दीर्घैकादेशे, योगे विष्णूदयः इति ।

**होतृकारः**—होतृ ऋकार इति स्थिते, यणं बाधित्वा अकः सवर्णाक्परत्वेन 'अकः सवर्णे दीर्घः' इति दीर्घैकादेशे, द्वयोः ऋकारयोः स्थाने दीर्घे ॠकारे, होतॄकारः इति । होतृ ऌकारः इति स्थितेऽपि होतॄकार एव, ऌवर्णस्य दीर्घाभावात् ऋऌवर्णयोः सावर्ण्यात् ।

**एङः पदान्तादति** । एङः पदान्तात् अति त्रिपदमिदं सूत्रम् । पूर्वरूपमित्यनुवर्तते एकः पूर्वपरयोरिति च । पदान्तात् एङः अति पूर्वरूपमिति । **पदान्तादिति** । पदान्तात् = पदान्तस्थात् । एङः = एङ्वर्णात् । अति = ह्रस्वाकारे । परे = परतः स्थिते । पूर्वरूपम् = पूर्वस्य रूपमिव रूपम् । एकादेशः । स्यात् ।

**हरेऽव**—हरे अव इति स्थिते, एचोऽच्परत्वेन 'एचोऽयवायावः' इति प्राप्त-

---

**श्रीशः**—'श्री ईशः' ऐसी स्थिति में इक् से अच् पर होने के कारण 'इको यणचि' से प्राप्त यण् का बाधकर अक् से सवर्ण अक् के परवर्ती होने के कारण पूर्व एवं पर के स्थान में 'अकः सवर्णे दीर्घः' से दीर्घ-एकादेश होने से दोनों के स्थान में दीर्घ ई होकर 'श्रीशः' हो गया ।

**विष्णूदयः**—'विष्णु उदयः' ऐसी स्थिति में इक् से अच् के परवर्ती होने के कारण 'इको यणचि' से प्राप्त यण को बाधकर अक् से सवर्ण अक् के परे होने के कारण 'अकः सवर्णे दीर्घः' से पूर्व एवं पर के स्थान में दीर्घ-एकादेश होकर 'विष्णूदयः' हो गया ।

**होतॄकारः**—'होतृ ऋकारः' ऐसी स्थिति में इक् से अच् के परवर्ती होने के कारण प्राप्त यण का बाधकर अक् से सवर्ण अक् के परवर्ती होने के कारण 'अकः सवर्णे दीर्घः' से पूर्व एवं पर के स्थान में दीर्घ-एकादेश होने से 'होतॄकारः' हो गया । 'होतृ ऌकारः' ऐसी स्थिति में भी 'होतॄकारः' ही होता है, क्योंकि ऌ का दीर्घ नहीं होता ।

**एङः पदान्तादतीति** । पदान्त में रहे एङ् से ह्रस्व अकार के परे रहने से पूर्वरूप-एकादेश होता है ।

( ४१ ) अनेकाल् शित् सर्वस्य १।१।५५ ।। ( **अनेकाल् शित् चादेशः सर्वस्यैव स्थाने स्यात् । ) इति प्राप्ते ।**

( ४२ ) ङिच्च १।१।५३ ।। **ङिदनेकालप्यन्त्यस्यैव स्यात् ।**

---

मयादेशं बाधित्वा पदान्तत्वेन अत्परत्वेन एङन्तत्वेन च 'एङः पदान्तादति' इति पूर्वरूपैकादेशेन द्वयोः स्थाने एकारे, हरेऽव इति ।

**विष्णोऽव**—विष्णो अव इति स्थिते, एचोऽच्परत्वेन 'एचोऽयवायावः' इति प्राप्तमवादेशं बाधित्वा पदान्तत्वेन एङन्तत्वेन अत्परत्वेन च 'एङः पदान्तादति' इति पूर्वरूपैकादेशे, विष्णोऽव इति ।

**अनेकाल् शित्सर्वस्येति** । अनेकाल् शित् सर्वस्य त्रिपदमिदं सूत्रम् । अनेकाल्—अनेकः=एकाधिकः, अल् यस्य सः तादृशः; यथा अस्तेर्भूरिति । शित्—श्=शकारः, इत्=इत्संज्ञको यस्य सः तादृशः; यथा औश् इत्यादि । च आदेशः । अनेकाल्शिदित्येकपदपक्षे अनेकाल् च शित् च तयोः समाहार इति । तादृशः आदेशः । सर्वस्य=सम्पूर्णस्यैव स्थानिनः । स्थाने भवति । अलोऽन्त्यस्यापवादः ।

**ङिच्चेति** । ङित् च द्विपदमिदं सूत्रम् । अलोऽन्त्यस्य इत्यनुवर्तते । ङित्—ङ्=ङकारः, इत् यस्य तादृशः आदेशः च=अन्त्यस्यैव अलः स्थाने भवति; यथा

---

**हरेऽव**—'हरे अव' ऐसी स्थिति में एच् से अच् के परवर्ती होने के कारण 'एचोऽयवायावः' से ए के स्थान में प्राप्त अय् आदेश का बाधकर पदान्त में रहे एङ् से अत् के परवर्ती होने के कारण 'एङः पदान्तादति' से पूर्वरूप-एकादेश होकर 'हरेऽव' हो गया ।

**विष्णोऽव**—'विष्णो अव' इस स्थिति में एच् से परे अच् के होने से ओ के स्थान में 'एचोऽयवायावः' से प्राप्त अवादेश को बाधकर पदान्त में रहे ओ से अत् परवर्ती होने के कारण 'एङः पदान्तादति' से पूर्वरूप होने पर 'विष्णोऽव' हो गया ।

**अनेकाल् शित्सर्वस्येति** । अनेक अल् वाला एवं श् की इत्संज्ञा वाला आदेश सम्पूर्ण के स्थान में होता है, अन्त्य अल् के स्थान में नहीं । इससे सम्पूर्ण के स्थान में प्राप्त होने पर—

**ङिच्चेति** । ङकार की इत्संज्ञा होने वाला आदेश अनेक अल् वाला होने पर भी अन्त्य अल् के स्थान में ही होता है ।

( ४३ ) अवङ् स्फोटायनस्य ६।१।१२३ ॥ **पदान्ते एङन्तस्य गोरवङ् वा स्यादचि । गवाग्रम् ।**

---

अवङ् । **ङिदिति ।** **ङित्** = ङ् इत् यस्य तादृशः आदेशः । अनेकाल् = अनेकः अल् यस्य तादृशः । अपि = च । अन्त्यस्य = अन्ते भवः अन्त्यस्तस्य अलः । एव = हि । स्थाने । स्यात् । अनेकालपि ङिदादेशस्तु सर्वस्यैव स्थाने भवति न तु अन्त्यस्याल इति ।

**अवङ् स्फोटायनस्येति** । द्विपदमिदं सूत्रम् । पदान्ते एङन्तात् गोरिति चानुवर्तते । स्फोटायनस्य = स्फोटायनमतेन नामग्रहणं पूजार्थम् । अवङ् = पदान्ते एङन्तस्य गोरवङ् इति । **पदान्ते इति** । पदान्ते एङन्तस्य = एङ् अन्ते यस्य तादृशस्य । गोः । अवङ् = अवङ् आदेशः । वा = विकल्पेन । अचि = अज्वर्णे परतः ।

**गवाग्रम्**—गो अग्रम् इति स्थिते, एचः अच्परत्वेन 'एचोऽयवायावः' इति प्राप्तमवादेशं बाधित्वा 'अवङ् स्फोटायनस्ये'ति अवङादेशे, तस्य अनेकाल्त्वेन 'अनेकाल् शित्सर्वस्ये'ति सर्वस्य स्थाने प्राप्ते, तस्यापवादेन तस्य ङित्वात् 'ङिच्चे'ति अन्त्यस्यालः आकारस्य स्थाने प्राप्ते, ङकारस्य 'हलन्त्यमि'तीत्संज्ञायां 'तस्य लोपः' इति लोपे, ग् अव अग्रम् इति जाते, योगे गव अग्रम् इति जाते, अकारादकारपरत्वेन सवर्णदीर्घे, गवाग्रमिति । 'सर्वत्र विभाषा गोः' इति प्रकृतिभावे तु गो अग्रम् । तस्यापि वैकल्पिकत्वेन तदभावपक्षे 'एङः पदान्तादति' इति पूर्वरूपे, गोऽग्रम् इति ।

---

**अवङ् स्फोटायनस्येति** । पदान्त में जो एङन्त गो शब्द है उसका विकल्प से अवङ् आदेश हो, अच् परवर्ती रहने से ।

**गवाग्रम्**—'गो अग्रम्' ऐसी स्थिति में ओकार से परे अच के रहने पर 'एचोऽयवायावः' से प्राप्त अवादेश को बाधकर 'अवङ् स्फोटायनस्य' से अवङ् आदेश हुआ । उस आदेश के अनेकाल् होने के कारण वह 'अनेकाल् शित् सर्वस्य' से सभी के स्थान में प्राप्त हुआ था, लेकिन आदेश के ङकार के इत्संज्ञावाला होने के कारण 'ङिच्च' से अन्त्य अल् ओ के स्थान में होकर 'ग् अवङ् अग्रम्' हो गया, ङकार की इत्संज्ञा से लोप हो जाने पर अकार से अकार के परे रहने से सवर्णदीर्घ होकर 'गवाग्रम्' हो गया ।

**( ४४ ) इन्द्रे च ६।१।१२४।। गोरवङ् स्यादिन्द्रे । गवेन्द्रः ।**

**( ४५ ) दूराद्धूते च ८।२।८४।। दूरात्सम्बोधने वाक्यस्य टेः प्लुतो वा स्यात् ।**

**( ४६ ) प्लुतप्रगृह्या अचि नित्यम् ६।१।१२५।। एतेऽचि प्रकृत्या स्युः । आगच्छ कृष्ण ३ अत्र गौश्चरति ।**

---

**इन्द्रे चेति ।** द्विपदमिदं सूत्रम् । पदान्ते एङः गोरिति चानुवर्तते । च = अवङ् इति । **गोरिति ।** गोः = गोशब्दस्य । अवङ् = अवङादेशः । इन्द्रे=इन्द्रशब्दे परे । नित्यार्थमिदं वचनम् ।

**गवेन्द्रः**—गो इन्द्र इति स्थिते, ओकारादिकारे परे 'एचोऽयवायावः' इति प्राप्तमवादेशं बाधित्वा इन्द्रशब्दपरत्वेन 'इन्द्रे च' इति गोशब्दस्य अवङादेशे, तस्य अनेकाल्त्वेऽपि ङित्वेन अन्त्यस्याल ओकारस्य स्थाने प्राप्ते, गव इन्द्र इति जाते, 'आद्गुणः' इति गुणे, गवेन्द्रः इति ।

**दूराद्धूते चेति ।** दूरात् हूते च त्रिपदमिदं सूत्रम् । वाक्यस्य टेः प्लुत इत्यनुवर्तते । **दूरादिति ।** दूरात् = विप्रकृष्टात् । सम्बोधने = आह्वाने अभिमुखीकरणे । वाक्यस्य । टेः = टिसंज्ञकभावस्य । वा = विकल्पेन । प्लुत इति ।

**प्लुतप्रगृह्या इति ।** प्लुतप्रगृह्याः अचि नित्यं त्रिपदमिदं सूत्रम् । प्रकृत्या इत्यनुवर्तते । प्लुतप्रगृह्याः—प्लुताः = प्लुतसंज्ञकाः, प्रगृह्याः = प्रगृह्यसंज्ञकाश्च ।

---

**इन्द्रे चेति ।** गो शब्द को अवङ् आदेश हो इन्द्र शब्द के परे रहने से । यह नित्य विधि है ।

**गवेन्द्रः**—'गो इन्द्रः' ऐसी स्थिति में ओकार से इ के परे रहने से 'एचोऽयवायावः' से प्राप्त अवादेश को बाध कर 'इन्द्रे च' से अवङ् आदेश हो गया तथा उसके अनेकाल् होने के कारण 'अनेकाल् शित् सर्वस्य' से सम्पूर्ण के स्थान में वह प्राप्त हुआ, लेकिन उसके ङ्कार के इत्संज्ञा वाला होने के कारण 'ङिच्च' से वह अन्त्य अल् ओ के स्थान में हुआ, तब 'ग् अव इन्द्रः' हो गया एवं गुण हो जाने से 'गवेन्द्रः' हो गया ।

**दूराद्धूते चेति ।** दूर से सम्बोधन में वाक्य का 'टि' प्लुत हो जाता है ।

**प्लुतप्रगृह्या इति ।** ये अर्थात् प्लुत एवं प्रगृह्य संज्ञा वाले अच् के परे रहने से नित्य रूप से प्रकृतिभाव होता है, अर्थात् उसमें कोई सन्धिकार्य नहीं होता ।

**( ४७ ) ईदूदेद्द्विवचनं प्रगृह्यम् १।१।११॥ ईदूदेदन्तं द्विवचनं प्रगृह्यं स्यात् । हरी एतौ । विष्णू इमौ । गङ्गे अमू ।**

---

अचि=अज्वर्णे परे । नित्यम्=नित्यत्वेन । प्रकृत्या=प्रकृतिभावेन । स्युरिति । **एतेऽचीति ।** एते=प्लुताः प्रगृह्याश्च । अचि=अज्वर्णे परे । प्रकृत्या=प्रकृतिभावेन । स्युः=न तत्र किमपि सन्धिकार्यमिति ।

**आगच्छ कृष्ण ३ अत्र गौश्चरति**—वाक्येऽस्मिन् कृष्ण अत्र इत्यत्र प्राप्तं सवर्णदीर्घं बाधित्वा कृष्णशब्दस्य सम्बोधने प्रथमाविभक्तित्वेन तदन्त्याकारस्य 'दूराद्धूते च' इति वा प्लुते 'प्लुतप्रगृह्या अचि नित्यमि'ति तस्य प्रकृतिभावेन सन्ध्यभावे तथा रूपम् । प्लुताभावपक्षे तु सन्धिरेवेति ।

**ईदूदेदिति ।** ईदूदेद् द्विवचनं प्रगृह्यं त्रिपदमिदं सूत्रम् । ईदूदेद्=इच्च ऊच्च एच्च तेषां समाहारः ईदूदेत् द्विवचनस्य विशेषणत्वात् तदन्तविधिः । द्विवचनमित्यनेन तु प्रत्ययत्वेऽपि न तदन्तग्रहणे संज्ञाविधौ प्रत्ययग्रहणे तदन्तविधेर्निषेधात् । द्विवचनम् । प्रगृह्यम् ।

**ईदूदेदन्तमिति ।** इच्च ऊच्च एच्च अन्ते यस्य तत् तथाभूतम् । द्विवचनं=यथा हरी विष्णू गङ्गे इत्यादि । प्रगृह्यं=प्रगृह्यसंज्ञाकम् । स्यात् ।

**हरी एतौ**—हरी इति हरिशब्दस्य प्रथमाविभक्तिद्विवचने रूपम् । हरि औ इति जाते, 'प्रथमयोः पूर्वसवर्णः' इति पूर्वसवर्णदीर्घैकादेशेन । तेन हरी

---

**आगच्छ कृष्ण ३ अत्र गौश्चरति**—इस वाक्य में कृष्ण के णकार के उत्तरवर्ती अकार से अत्र का अकार परे रहने से सवर्णदीर्घ होना था, लेकिन उसे वाक्य के टि होने के कारण उसका 'दूराद्धूते च' से प्लुत होने पर 'प्लुतप्रगृह्या अचि नित्यम्' से उसका प्रकृतिभाव हो जाने से सन्धिकार्य नहीं हुआ और 'कृष्ण ३ अत्र' ऐसा ही रहा । प्लुत न होने के पक्ष में तो सवर्णदीर्घ हो जायेगा ।

**ईदूदेद् द्विवचनं प्रगृह्यमिति ।** ई ( दीर्घ ईकार ), ऊ ( दीर्घ ऊकार ) एवं एकार के अन्त्य में होने वाले द्विवचन प्रगृह्य हों ।

**हरी एतौ**—हरी यह हरि शब्द का प्रथमा विभक्ति में द्विवचन का रूप है । जैसे कि 'हरि औ' ऐसी स्थिति में यण् को बाध कर 'प्रथमयोः पूर्वसवर्णः' से पूर्वसवर्णदीर्घ होकर हरी होता है । 'हरी एतौ' में 'इको यणचि' से प्राप्त

एतौ इत्यत्र ईकारादचि यणि प्राप्ते तं बाधित्वा ईदन्तद्विवचनत्वेन 'ईदूदेद् द्विवचनं प्रगृह्यमि'ति प्रगृह्यसंज्ञायां 'प्लुतप्रगृह्या अचि नित्यमि'ति प्रकृतिभावेन सन्ध्यभावे रूपम्।

**विष्णू इमौ**—विष्णू इति विष्णुशब्दस्य प्रथमाविभक्तिद्विवचने रूपम्। विष्णु औ इति जाते, 'प्रथमयोः पूर्वसवर्णः' इति पूर्वसवर्णदीर्घे रूपम्। तेन विष्णू इमौ इत्यत्र ऊकारादचि परे प्राप्तं यणं बाधित्वा ऊदन्तद्विवचनत्वेन 'ईदूदेद् द्विवचनं प्रगृह्यमि'ति प्रगृह्यसंज्ञायां 'प्लुतप्रगृह्या अचि नित्यमि'ति प्रकृतिभावेन तथैव।

**गङ्गे अमू**—गङ्गे इति गङ्गाशब्दस्य प्रथमाविभक्तिद्विवचने रूपम्। गङ्गा औ इति जाते, 'औङ आपः' इति औ इत्येतस्य स्थाने शि-आदेशे गुणे रूपम्। तेन गङ्गे अमू इत्यत्र एकारादच्परत्वेन 'एचोऽयवायावः' इति प्राप्तमयादेशं बाधित्वा 'एङः पदान्तादति' इति पररूपे प्राप्ते तस्याप्यपवादेन एदन्तद्विवचनत्वेन 'ईदूदेद् द्विवचनं प्रगृह्यमि'ति प्रगृह्यसंज्ञायां 'प्लुतप्रगृह्या अचि नित्यमि'ति प्रकृतिभावेन तथैव रूपम्।

---

यण् को बाध कर ईकारान्त द्विवचन होने के कारण 'ईदूदेद् द्विवचनं प्रगृह्यम्' से प्रगृह्यसंज्ञा होने पर 'प्लुतप्रगृह्या अचि नित्यम्' से प्रकृतिभाव होने से सन्धिकार्य न हो पाने से वैसे ही रहा।

**विष्णू इमौ**—विष्णू यह विष्णु शब्द का प्रथमा विभक्ति के द्विवचन का रूप है। 'विष्णु औ' ऐसी स्थिति में पूर्वसवर्णदीर्घ होने से ऐसा बनता है। 'विष्णू इमौ' में 'इको यणचि' से यण् होना था लेकिन ऊकारान्त द्विवचन होने के कारण उसे 'ईदूदेद् द्विवचनं प्रगृह्यम्' से प्रगृह्यसंज्ञा होकर 'प्लुतप्रगृह्या अचि नित्यम्' से प्रकृतिभाव होने से सन्धिकार्य के अभाव में वैसे ही रहा।

**गङ्गे अमू**—गङ्गे यह गङ्गा शब्द का प्रथमा विभक्ति के द्विवचन का रूप है। 'गङ्गा औ' होने पर औ के स्थान में 'औङ आपः' से शि आदेश हो गया और श् के इत्संज्ञा लोप से इ रहकर 'गङ्गा इ' होने पर गुण होने पर यह बनता है। 'गङ्गे अमू' में 'एचोऽयवायावः' से प्राप्त अयादेश को बाधकर 'एङः पदान्तादति' से पूर्वरूप होना था लेकिन उसके एकारान्त द्विवचन होने के कारण उसे 'ईदूदेद् द्विवचनं प्रगृह्यम्' से प्रगृह्यसंज्ञा होकर 'प्लुतप्रगृह्या अचि नित्यम्' से उसका प्रकृतिभाव होने से सन्धि के अभाव में यथावत् रहा।

( ४८ ) चादयोऽसत्त्वे १।४।५७ ।। **अद्रव्यार्थाश्चादयो निपाताः स्युः ।**

( ४९ ) प्रादयः १।४।५८ ।। **एतेऽपि तथा स्युः ।**

( ५० ) निपात एकाजनाङ् १।१।१४ ।। **एकोऽच् निपात आङ्वर्जः प्रगृह्यः स्यात् । इ इन्द्रः । उ उमेशः । वाक्यस्मरणयोरङित् । आ एवं नु मन्यसे । आ एवं किल तत् । अन्यत्र ङित् । आ ईषदुष्णम्-ओष्णम् ।**

---

**चादयोऽसत्त्व इति ।** चादयः असत्त्वे द्विपदमिदं सूत्रम् । निपाता इत्यनुवर्तते । असत्त्वे=द्रव्यभिन्नेऽर्थे । चादयः=निपाताः भवन्तीति । **अद्रव्यार्था इति ।** अद्रव्यार्थाः=सत्त्वभिन्नार्थाः । चादयः=च वा ह इत्यादयः । निपाताः=निपातसंज्ञकाः । स्युः । सत्त्वार्थे तु न; यथा स्वाहा अग्नायी । चादिराकृतिगणः । सामान्यतः सर्वे एकाचो निपाताः; यथा अ आ इ ई उ ऊ ए ओ ऐ औ इत्येते अहो इत्यादयः शब्दाश्च तत्रैवान्तर्भूताः ।

**प्रादय इति ।** असत्त्वे निपाता इति चानुवर्तते । **एते इति ।** एते=प्रादयः । अपि=च । तथा=चादय इव असत्त्वेऽर्थे निपाता इति ।

**निपात एकाजनाङ् इति ।** निपातः एकाच् अनाङ् त्रिपदमिदं सूत्रम् । प्रगृह्य इत्यनुवर्तते । अनाङ् एकाज् निपातः प्रगृह्य इति । अनाङ्=आङ्भिन्नः । एकाच्=एकश्चासावच्च एकाच्, य एक एव अच् तादृशः; यथा अ आ इ ई इत्यादि । न तु एकः अच् यत्रेति तथा सति प्रशब्दोऽपि प्रगृह्यः स्यात्तथा प्रोपाभ्यां युजेरयज्ञपात्रेषु इति निर्देशो नोपपद्येत । एकोऽज् इति पाठे । एकः= अद्वितीयः । अच् इति । निपातः=निपातसंज्ञः चादयोऽसत्त्वे इति । प्रगृह्यः= प्रगृह्यसंज्ञ इति ।

**इ इन्द्रः**—इ इन्द्र इति स्थिते, यणं बाधित्वा अकोऽकि सवर्णदीर्घे प्राप्ते, तदपवादत्वेन इ इत्येतस्य चादिगणपठितत्वात् सत्त्वेतरार्थकत्वाच्च 'चादयोऽसत्त्वे'

---

**चादयोऽसत्त्वे इति**—सत्त्व अर्थात् द्रव्य-भिन्न अर्थ में चादि गण में पठित शब्द निपातसंज्ञक हों । चादि भी आकृति गण है । सभी एक अच् वाले अ आ आदि निपात इसी में आते हैं और अहो भी ।

**प्रादय इति ।** प्रादि भी उसी तरह निपातसंज्ञक हों असत्त्व अर्थ में ।

**निपात एकाजनाङिति**—आङ् को छोड़कर जो यह एक अच् वाला अ आ आदि निपात है वह प्रगृह्य हो ।

**इ इन्द्रः**—'इ इन्द्रः' में 'इको यणचि' से प्राप्त यण् को बाधकर अक् से सवर्ण

इति निपातसंज्ञायाम्, तस्य एकाज्निपातत्वेन 'निपात एकाजनाङ्' इति प्रगृह्य-संज्ञायां 'प्लुतप्रगृह्या अचि नित्यमि'ति प्रकृतिभावेन सन्धिकार्याभावे तथैव। अत्र इ इति विस्मयेऽर्थे।

**उ उमेशः**—उ उमेश इति स्थिते, उकारादचि परे प्राप्तं यणं बाधित्वा अकः सवर्णेऽकि परे प्राप्तस्य सवर्णदीर्घस्य अपवादत्वेन उ इत्येतस्य चादिगण-पठितत्वात् अद्रव्यार्थत्वाच्च 'चादयोऽसत्त्वे' इति निपातसंज्ञायां, तस्य एकाज्नि-पातत्वेन 'निपात एकाजनाङ्' इति प्रगृह्यसंज्ञायां 'प्लुतप्रगृह्या अचि नित्य-मि'ति प्रकृतिभावेन सन्धिकार्याभावे तथैव। अत्र उ इति वितर्केऽर्थे।

**वाक्येति**। आ इति वाक्यस्मरणयोः—वाक्ये=प्रक्रान्तवाक्यार्थस्य अन्य-थात्वे स्मरणे=समाध्याने च। अङित्=ङिद्विवर्जितः अन्यत्र तु ङिदिति। ईषदर्थे क्रियायोगे मर्यादाभिविधौ चेति। अङित् आ प्रगृह्यः निपातसंज्ञा च तस्य चादयोऽसत्त्वे इति। ङित् आ न तथा तस्य निपातसंज्ञा तु प्रादय इति। अङित-मुदाहरति—**आ एवं नु मन्यसे इति**। अत्र आ एवम् इत्यत्र प्राप्तं गुणं बाधित्वा एच्परत्वेन प्रवृत्ताया वृद्धेरपवादत्वेन आ इत्येतस्य चादिगणपठितत्वेन सत्त्वभिन्ना-

---

अक् के परे होने से दीर्घ एकादेश होना था लेकिन इ चादि गण में पठित होने एवं द्रव्यभिन्न अर्थ में प्रयुक्त होने से उसे 'चादयोऽसत्त्वे' से निपातसंज्ञा होकर एक ही अच् वाला निपात होने से 'निपात एकाजनाङ्' से प्रगृह्यसंज्ञा होकर 'प्लुतप्रगृह्या अचि नित्यम्' से प्रकृतिभाव हो जाने के कारण सन्धि के अभाव में यथावत् रहा। यहाँ इ का अर्थ विस्मय है।

**उ उमेशः**—उ उमेशः में उसे अच् परवर्ती होने से प्राप्त यण् को बाधकर अक् से सवर्ण अक् परवर्ती होने से सवर्णदीर्घ होना था, लेकिन उ के चादिगण में पठित होने एवं द्रव्यभिन्न अर्थ में प्रयुक्त होने से उसे 'चादयोऽसत्त्वे' से निपातसंज्ञा होकर उसके एक अच् वाला निपात होने से उसे 'निपात एका-जनाङ्' से प्रगृह्य संज्ञा होकर 'प्लुतप्रगृह्या अचि नित्यम्' से प्रकृतिभाव होने से सन्धिकार्य के अभाव में यथावत् रहा। यहाँ उ का अर्थ वितर्क है।

वाक्य ( प्रक्रान्त वाक्यार्थ को अन्यथा करने ) एवं स्मरण अर्थ में आ बिना ङित् का होता है। जैसे—

**आ एवं नु मन्यसे**—यहाँ 'आ एवं' इस स्थिति में प्राप्त गुण को बाध कर वृद्धि होनी थी, लेकिन आ के अङित् होने से चादिगण में पठित होने के कारण एवं सत्त्वभिन्न अन्यथा अर्थ में प्रयुक्त होने के कारण उसे 'चादयोऽसत्त्वे' से

(५१) ओत् । १।१।१५ ।। **ओदन्तो निपातः प्रगृह्यः स्यात्**। अहो ईशाः ।

---

र्थकत्वेन च 'चादयोऽसत्त्वे' इति निपातसंज्ञायां, तस्य आङ्भिन्नैकाज्निपातत्वेन 'निपात एकाजनाङ्' इति प्रगृह्यसंज्ञायां 'प्लुतप्रगृह्या अचि नित्यमि'ति प्रकृतिभावेन सन्धिकार्याभावे तथैव। एतच्च वाक्ये। स्मरणे तु **आ एवं किल तत्** इति। अत्र आ एवम् इत्यत्र अवर्णादचि परे प्राप्तं गुणं बाधित्वा एच्परत्वेन प्रवृत्तायाः वृद्धेः अपवादरूपेण आ इत्येतस्य चादिगणपठितत्वेन सत्त्वभिन्नार्थकत्वेन च 'चादयोऽसत्त्वे' इति निपातसंज्ञायां, तस्य आङ्भिन्नैकाज्निपातत्वेन 'निपात एकाजनाङ्' इति प्रगृह्यसंज्ञायां 'प्लुतप्रगृह्या अचि नित्यमि'ति प्रकृतिभावेन सन्धिकार्याभावे तथैव।

**अन्यत्रेति**। अन्यत्र=वाक्यस्मरणभिन्नस्थले, य आं: स ङित्=ङ् इत् यस्येति तथा। आ=ईषत् उष्णम्=**ओष्णम्**—आ उष्णम् इति स्थिते, आ इत्येतस्य 'प्रादयः' इति निपातत्वेऽपि ङित्वेन प्रगृह्यसंज्ञाभावात् प्रकृतिभावाभावेन अवर्णादुकारे परे 'आद्गुणः' इति गुणे पूर्वपरयोः स्थाने कण्ठयोष्ठयत्वेन ओकारे, ओष्णमिति।

**ओदिति**। निपात इत्यनुवर्तते। ओत् इति निपातस्य विशेषणत्वेन तदन्तविधिः। **ओदन्त इति**। ओदन्तः=ओत् अन्ते यस्य तादृशः। निपातः। अनेकाजपि। प्रगृह्यः। स्यात्।

---

निपातसंज्ञा होकर एकाच् निपात होने से उसे 'निपात एकाजनाङ्' से प्रगृह्यसंज्ञा होने से 'प्लुतप्रगृह्या अचि नित्यम्' से उसके प्रकृतिभाव होने से सन्धिकार्य न होकर यथावत् रहा।

**आ एवं किल तत्**—यहाँ भी उसी तरह है।

**अन्यत्रेति**। वाक्य एवं स्मरण भिन्न में तो आ ङित् होता है और एकाज् निपात होने पर भी उसे प्रगृह्यसंज्ञा नहीं होती।

**आ=ईषत् उष्णम्=ओष्णम्**—यहाँ 'आ उष्णम्' में आ के 'कुछ-कुछ' अर्थ में प्रयुक्त होने से ङित् होने पर उसे 'प्रादयः' से निपातसंज्ञा होने पर भी आङ् होने से प्रगृह्यसंज्ञा न हुई, अतः आ से उ के परे होने पर 'आद्गुणः' से गुण होकर ओ होने से 'ओष्णम्' हो गया।

**ओदिति**। ओकार अन्त में होने वाला निपात भी प्रगृह्य होता है।

(५२) अचो रहाभ्यां द्वे ८।४।४६ ॥ **अचः पराभ्यां रेफहकाराभ्यां परस्य यरो द्वे वा स्तः । गौर्य्यौ ।**

**इत्यच्सन्धिः ।**

---

---

**अहो ईशाः**—अहो ईशाः इत्यत्र ओकारादचि परे 'एचोऽयवायावः' इति प्राप्तस्यावादेशस्यापवादरूपेण अहो इत्येतस्य चादिगणपठितत्वात् सत्त्वभिन्नार्थकत्वाच्च 'चादयोऽसत्त्वे' इति निपातसंज्ञायाम्, ओदन्तनिपातत्वेन 'ओत्' इति प्रगृह्यसंज्ञया 'प्लुतप्रगृह्या अचि नित्यमि'ति प्रकृतिभावे सन्ध्यभावे तथैव ।

**अचो रहाभ्यां द्वे इति ।** अचः रहाभ्यां द्वे त्रिपदमिदं सूत्रम् । यर इति वा इति चानुवर्तते । अच इति पञ्चम्यन्तं पदं रहाभ्यामिति च । यर इति षष्ठ्यन्तम् । **अच इति ।** अचः=अज्वर्णात् । पराभ्यां=परवर्तिभ्याम् । रेफहकाराभ्यां=रकारहवर्णाभ्याम् । परस्य=परवर्तिनः । यरः=यर्वर्णस्य । द्वे=द्वित्वम् । वा =विकल्पेन । स्तः । इति ।

**गौर्य्यौ**—गौरीशब्दात् औ विभक्तौ 'दीर्घाज्जसि चे'ति पूर्वसवर्णदीर्घनिषेधेन यणि, गौर्यौ इति जाते, 'अचो रहाभ्यां द्वे' इति औपरस्य रकारस्य अनुवर्तित्वाद् यकारस्य द्वित्वे, गौर्य्यौ इति । द्वित्वाभावपक्षे गौर्यौ ।

**इत्यच्सन्धिः ।**

इत्यच्सन्धिर्हि राकायां सङ्क्षेपेण निरूपितः ।
सारसिद्धान्तकौमुद्याः प्रणेत्रा दर्शितो यथा ॥ १ ॥
यथा चान्द्रमसी ज्योत्स्ना राकया सम्प्रसीदति ।
तथाऽनया हि भासेत सारसिद्धान्तकौमुदी ॥ २ ॥
सिद्धान्तकौमुदीं येन सङ्क्षिप्य विहिता विदा ।
ता मध्यलघुसाराख्यकौमुद्यस्तं सदा नुमः ॥ ३ ॥

---

---

**अहो ईशाः**—यहाँ 'अहो ईशाः' में 'एचोऽयवायावः' से अवादेश होना था लेकिन अहो के चादिगण में पठित होने एवं सत्त्वभिन्न आश्चर्य अर्थ में प्रयुक्त होने से उसे 'चादयोऽसत्त्वे' से निपातसंज्ञा होकर ओकारान्त होने से 'ओत्' से प्रगृह्यसंज्ञा हुई, तब उसका 'प्लुतप्रगृह्या अचि नित्यम्' से प्रकृतिभाव होने के कारण सन्धिकार्य न होने से यथावत् रहा ।

# अथ हल्सन्धिः

( ५३ ) स्तोः श्चुना श्चुः ८।४।४० ।। **सकारतवर्गयोः शकारचवर्गाभ्यां योगे शकारचवर्गौ स्तः । हरिश्शेते । रामश्चिनोति । सच्चित् । शार्ङ्गिञ्जयः ।**

---

अथ व्यञ्जनसन्धिषु श्चुत्वं निरूपयति—**स्तोः श्चुना श्चुरिति** । त्रिपदमिदं सूत्रम् । स्तोः = षष्ठ्यन्तपदम् । सकारतवर्गयोः स्थाने । श्चुना=शकारचवर्गाभ्यां योगे, श्चुः=शकारचवर्गौ भवतः । **सकारेति** । सकारतवर्गयोः—सकारः=दन्त्य-सकारः, तवर्गः = तथदधनाः च तयोः । शकारचवर्गाभ्यां—शकारः=तालव्य-शकारः, चवर्गः = चछजझञाः ताभ्याम् । योगे = वर्णान्तराव्यवहितत्वेन सन्नि-धाने । शकारचवर्गौ = एतौ क्रमेण सकारस्य स्थाने शकारः तवर्गस्य स्थाने चवर्गः । स्तः ।

**हरिश्शेते**—हरिस् शेते इति स्थिते, सस्य शकारेण योगे 'स्तोः श्चुना श्चुरि'ति शत्वे, हरिश्शेते इति ।

---

**अचो रहाभ्यां द्वे इति** । अच् से परवर्ती होने वाले रकार एवं हकार से परे आने वाले यर् का द्वित्व विकल्प से हो ।

**गौर्य्यौ**—गौरी शब्द का प्रथमा विभक्ति के द्विवचन का रूप है गौर्यौ । 'गौरी औ' होने पर प्राप्त यण् को बाध कर प्रवृत्त पूर्वसवर्णदीर्घ का 'दीर्घा-ज्जसि च' से निषेध होकर यण् होने से 'गौर्यौ' हुआ । उसमें औकार से परवर्ती रेफ से परे होने से यकार का 'अचो रहाभ्यां द्वे' से विकल्प से द्वित्व होने पर 'गौर्य्यौ' बन गया । द्वित्व के अभाव के पक्ष में 'गौर्यौ' ही रहा ।

अच्सन्धि समाप्त हुई ।

येन सङ्कलिता बालप्रेयसी सारकौमुदी ।
तस्मै वरदराजाय प्रज्ञाप्रौढाय ते नमः ।। १ ।।

---

**स्तोः श्चुना श्चुरिति** । सकार एवं तवर्ग का शकार एवं चवर्ग के योग में शकार एवं चवर्ग क्रम से होते हैं ।

**हरिश्शेते**—'हरिस् शेते' ऐसी स्थिति में सकार का शकार के साथ योग होने से 'स्तोः श्चुना श्चुः' से शत्व होकर 'हरिश्शेते' हुआ ।

(५४) शात् ८।४।४४।। **शात्परस्य तवर्गस्य चुत्वं न स्यात्। विश्नः। प्रश्नः।**

---

**रामश्चिनोति**—रामस् चिनोति इति स्थिते, सस्य शकोरण योगे 'स्तोः श्चुना श्चुरि'ति शत्वे, रामश्चिनोति इति।

**सच्चित्**—सत् चित् इति स्थिते, तकारस्य चकारयोगे 'स्तोः श्चुना श्चुरि'ति चुत्वेन वर्गप्रथमस्य वर्गप्रथमे चादेशे, सच्चित् इति।

**शार्गिञ्जयः**—शार्गिन् जय इति स्थिते, नकारस्य जकारयोगे 'स्तोः श्चुना श्चुरि'ति चुत्वेन वर्गपञ्चमस्य वर्गपञ्चमादेशे, शार्ङ्गिञ्जय इति।

**शात् इति**। नेत्यनुवर्तते। **शादिति**। शात्=शकारात्। परस्य=परवर्तिनः। तवर्गस्य=तथदधनानाम्। चुत्वं=चवर्गादेशः। न। स्यात्।

**विश्नः**—विश् न इति स्थिते, नकारस्य शकारयोगे 'स्तोः श्चुना श्चुरि'ति चवर्गादेशे प्राप्ते, नस्य शपरत्वेन 'शात्' इति तस्य निषेधे, विश्नः इति।

**प्रश्नः**—प्रश् न इति स्थिते, शकारेण नकारस्य योगे 'स्तोः श्चुना श्चुरि'ति चवर्गादेशे प्राप्ते, तस्य शकारात्परत्वेन 'शात्' इति तन्निषेधे, प्रश्न इति।

---

**रामश्चिनोति**—'रामस् चिनोति' ऐसी स्थिति में सकार का च के साथ योग होने के कारण शत्व होकर 'रामश्चिनोति' हो गया।

**सच्चित्**—'सत् चित्' ऐसी स्थिति में तकार का चकार के साथ योग में 'स्तोः श्चुना श्चुः' से चुत्व होकर प्रथम वर्ण के स्थान में प्रथम वर्ण के आ जाने से 'सच्चित्' हो गया।

**शार्ङ्गिञ्जयः**—'शार्ङ्गिन् जयः' ऐसी स्थिति में नकार का जकार के साथ योग होने के कारण 'स्तोः श्चुना श्चुः' से चुत्व होकर पञ्चम वर्ण के स्थान में पञ्चम वर्ण के आ जाने से 'शार्ङ्गिञ्जयः' हुआ।

**शादिति**। शकार से परे तवर्ग का चुत्व न हो।

**विश्नः**—'विश् नः' ऐसी स्थिति में नकार का शकार के योग में 'स्तोः श्चुना श्चुः' से प्राप्त चुत्व का नकार का शकार से परे रहने के कारण 'शात्' से निषेध होने पर 'विश्नः' हो गया।

**प्रश्नः**—'प्रश् नः' ऐसी स्थिति में नकार का शकार के योग में 'स्तोः श्चुना श्चुः' से प्राप्त चुत्व का नकार का शकार से परे रहने के कारण 'शात्' से निषेध होने पर 'प्रश्नः' हुआ।

(५५) ष्टुना ष्टुः ८।४।४१।। स्तोः ष्टुना योगे ष्टुः स्यात्
रामष्षष्ठः। रामष्टीकते। पेष्टा। तट्टीका। चक्रिण्ढौकसे।

---

निषेधोऽयं शकारात्परस्यैव शकारे परे तु चुत्वं भवत्येव। यथा सन् शम्भु=सञ् शम्भुरिति।

ष्टुत्वसन्धिं निरूपयति—ष्टुना ष्टुरिति। द्विपदमिदं सूत्रम्। स्तोरित्यनुवर्तते। स्तोरिति। स्तोः=सकारतवर्गयोः। ष्टुना=षकारटवर्गेण। योगे। ष्टुः=क्रमात् षकारटवर्गौ। स्यात् इति।

**रामष्षष्ठः**—रामस् षष्ठ इति स्थिते, सकारस्य षकारेण योगे 'ष्टुना ष्टुरि'ति षत्वे, रामष्षष्ठः इति।

**रामष्टीकते**—रामस् टीकते इति स्थिते, सकारस्य टकारेण योगे 'ष्टुना ष्टुः' इति षत्वे, रामष्टीकते इति।

**पेष्टा**—पेष् ता इति स्थिते, तकारस्य षकारेण योगे 'ष्टुना ष्टुः' इति ष्टुत्वेन वर्गप्रथमस्य स्थाने वर्गप्रथमे टकारे, पेष्टा इति।

**तट्टीका**—तत् टीका इति स्थिते, तकारस्य टकारेण योगे 'ष्टुना ष्टुरि'ति ष्टुत्वेन वर्गप्रथमस्य तकारस्य स्थाने वर्गप्रथमे टकारे, तट्टीका इति।

**चक्रिण्ढौकसे**—चक्रिन् ढौकसे इति स्थिते, नकारस्य ढकारेण योगे 'ष्टुना ष्टुरि'ति ष्टुत्वेन वर्गपञ्चमस्य नकारस्य स्थाने वर्गपञ्चमे णकारे, चक्रिण्ढौकसे इति।

---

लेकिन यह निषेध तवर्ग शकार से परे रहने पर ही होता है, शकार परवर्ती होने पर तो चुत्व ही होगा। जैसे सन् शम्भुः=सञ्शम्भुः।

**ष्टुना ष्टुरिति**। सकार एवं तवर्ग का षकार एवं टवर्ग के योग में षत्व एवं टुत्व हो।

**रामष्षष्ठः**—'रामस् षष्ठः' ऐसी स्थिति में षकार के योग में 'ष्टुना ष्टुः' से सकार का षत्व होने पर 'रामष्षष्ठः' रूप सिद्ध हुआ।

**रामष्टीकते**—'रामस् टीकते' ऐसी स्थिति में सकार का टकार के योग में 'ष्टुना ष्टुः' से षत्व होकर 'रामष्टीकते' सिद्ध हुआ।

**पेष्टा**—'पेष् ता' इस स्थिति में तकार का षकार के योग में 'ष्टुना ष्टुः' से टुत्व होने पर 'पेष्टा' रूप बना।

**तट्टीका**—'तत् टीका' ऐसी स्थिति में तकार का टकार के योग में 'ष्टुना ष्टुः' से टुत्व होने पर 'तट्टीका' सिद्ध हुआ।

**चक्रिण्ढौकसे**—'चक्रिन् ढौकसे' ऐसी स्थिति में नकार का ढकार के योग

(५६) न पदान्ताट्टोरनाम् ८।४।४२।। पदान्ताट्टवर्गात्परस्यानामः स्तोः ष्टुर्न स्यात् । षट् सन्तः । षट् ते । अनाम्नवतिनगरीणामिति वाच्यम् (वा०) । षण्णाम् । षण्णवतिः । षण्णगर्यः ।

---

में 'ष्टुना ष्टुः' से टुत्व होने से पञ्चम वर्ण के स्थान में पञ्चम वर्ण होकर 'चक्रिण्ढौकसे' रूप सिद्ध हुआ ।

**न पदान्ताट्टोरनामिति** । न पदान्तात् टोः अनाम् चतुष्पदमिदं सूत्रम् । ष्टुरित्यनुवर्तते । **पदान्तादिति** । पदान्तात्=पदान्तस्थात् । टवर्गात्=ट ठ ड ढ ण इत्येतेष्वन्यतमात् । परस्य=परे स्थितस्य । अनामः=नाम्भिन्नस्य नामिति सनुट् आम् । स्तोः=सकारतवर्गयोः । ष्टुः=षत्वटुत्वे । न । स्यात् ।

**षट् सन्तः**–षट् सन्तः इति स्थिते, टकारेण सकारस्य योगे 'ष्टुना ष्टुरि'ति षत्वे प्राप्ते, सस्य पदान्तात् टकारात्परत्वेन नाम्भिन्नत्वेन च 'न पदान्ताट्टोरनाम्' इति तन्निषेधे, षट् सन्त इत्येव ।

**षट् ते**—षट् ते इति स्थिते, टकारेण तकारस्य योगे 'ष्टुना ष्टुरि'ति टुत्वे प्राप्ते, तकारस्य पदान्तात् टकारात्परत्वेन नाम्भिन्नत्वेन च 'न पदान्ताट्टोरनाम्' इति तन्निषेधे, षट् ते इत्येव ।

**अनामिति** । सूत्रे अनामिति ग्रहणे नवति-नगरीशब्दगतनकारस्याऽपि टुत्व-निषेधो न स्यादिति वाच्यमिति । अनामित्यत्र नवतिनगरीशब्दयोरपि ग्रहणं, तेन 'अनाम्नवतिनगरीणाम्' इति सूत्रे वक्तव्यमिति ।

---

**न पदान्ताट्टोरनामिति** । पदान्त में रहे टवर्ग से परे नाम्-भिन्न तवर्ग एवं सकार का ष्टुत्व न हो ।

**षट् सन्तः**—'षट् सन्तः' इस स्थिति में सकार का टकार के योग में 'ष्टुना ष्टुः' से प्राप्त षत्व का 'न पदान्ताट्टोरनाम्' से निषेध होने से 'षट् सन्तः' सिद्ध हुआ ।

**षट् ते**—'षट् ते' इस स्थिति में तकार का टकार के योग में 'ष्टुना ष्टुः' से प्राप्त टुत्व का तकार का पदान्त टवर्ग से परे होने के कारण 'न पदान्ताट्टोरनाम्' से निषेध होने से 'षट् ते' रूप सिद्ध हुआ ।

**अनामिति** । टुत्व के निषेध के अभाव में नाम् के साथ-साथ नवति एवं नगरी का भी ग्रहण हो ।

## ( ५७ ) तोः षि ८।४।४३।। न ष्टुत्वम् । सन्षष्ठः ।

**षण्णाम्**—षड् नाम् इति स्थिते, नकारस्य डकारेण योगे 'ष्टुना ष्टुरि'ति टुत्वे प्राप्ते, नकारस्य पदान्तगतटकारपरत्वेऽपि नाम्त्वेन निषेधाभावे टुत्वेऽकारस्यानुनासिके परे प्रत्ययपरत्वेन नित्यानुनासिके, षण्णामिति । ( षड् इति च षष् नाम् इति स्थिते, षष् इत्येतस्य पदसंज्ञायां 'झलां जशोऽन्ते' इति जश्त्वेन षड् । )

**षण्णवतिः**—षष् = षड् नवति इति स्थिते, नकारस्य डकारेण योगे 'ष्टुना ष्टुरि'ति प्राप्तस्य टुत्वस्य 'अनाम्नवतिनगरीणामिति वाच्यम्' इति पदान्तटवर्गपरत्वेऽपि टुत्वनिषेधाभावेन टुत्वेऽनुनासिके, षण्णवतिः इति ।

**षण्णगर्यः**—षष् = षड् नगर्यः इति स्थिते, नकारस्य डकारेण योगे 'ष्टुना ष्टुरि'ति प्राप्तस्य टुत्वस्य 'अनाम्नवतिनगरीणामिति वाच्यमि'ति नस्य पदान्तटवर्गपरत्वेऽपि टुत्वनिषेधाभावेन टुत्वे, अनुनासिके, षण्णगर्य इति । उभयत्र षडिति च 'षष्' इत्येतस्य षकारस्य 'झलां जशोऽन्ते' इति जश्त्वेन ।

**तोः षि इति** । न टुरित्यनुवर्तते । तोः = तवर्गस्य । षि = षकारे परे । न । ष्टुत्वम् = टुत्वं नेति ।

**सन्षष्ठः**—सन् षष्ठ इति स्थिते, नकारस्य षकारेण योगे 'ष्टुना ष्टुरि'ति टुत्वे प्राप्ते, षकारपरत्वेन तस्य 'तोः षि' इति निषेधेन तदभावे सन्षष्ठः इति ।

---

**षण्णाम्**—'षड् नाम्' इस स्थिति में नकार का डकार के योग में 'ष्टुना ष्टुः' से प्राप्त टुत्व का नाम् होने से निषेध के अभाव में टुत्व एवं डकार का अनुनासिक होने पर 'षण्णाम्' यह रूप सिद्ध हुआ ।

**षण्णवतिः**—'षड् नवतिः' इस स्थिति में नकार का डकार के योग में 'ष्टुना ष्टुः' से प्राप्त टुत्व का नवति शब्द होने के कारण निषेध के अभाव में टुत्व होकर न का ण एवं ड् का अनुनासिक होने पर 'षण्णवतिः' हो गया ।

**षण्णगर्यः**—'षड् नगर्यः' इस स्थिति में नकार का डकार के योग में 'ष्टुना ष्टुः' से प्राप्त टुत्व का पदान्त टवर्ग से परे होने पर भी नगरी शब्द होने से निषेध न हो पाने से टुत्व होकर न का ण एवं ड् का अनुनासिक होने पर 'षण्णगर्यः' रूप सिद्ध हुआ ।

**तोः षीति** । षकार परे रहने से तवर्ग का टुत्व न हो ।

**सन्षष्ठः**—'सन् षष्ठ.' ऐसी स्थिति में नकार का षकार के योग में

(५८) झलां जशोऽन्ते ८।२।३९ ॥ **पदान्ते झलां जशः स्यु । वागीशः ।**

( ५९ ) यरोऽनुनासिकेऽनुनासिको वा ८।४।४५ ॥ **यरः पदान्तस्यानुनासिके परेऽनुनासिको वा स्यात् । एतन्मुरारिः एतद् मुरारिः । प्रत्यये भाषायां नित्यम् । तन्मात्रम् । चिन्मयम् ।**

---

जश्त्वमाह—**झलां जशोऽन्त इति ।** झलां जशः अन्ते त्रिपदमिदं सूत्रम् । झलामिति षष्ठ्यन्तम् । अन्ते झलां जशः इति । **पदान्त इति ।** पदान्ते=पदान्ते स्थिते । झलां=झल्वर्णानां स्थाने । जशः=जश्वर्णाः । स्युः ।

**वागीशः**—वाक् ईशः इति स्थिते, वाक् इत्येतस्य 'सुप्तिङन्तं पदमि'ति पदसंज्ञायां, पदान्तत्वेन ककारस्य झलः 'झलां जशोऽन्ते' इति जश्त्वेन जशि, आन्तरतम्येन गकारे, वागीशः इति ।

**यरोऽनुनासिकेऽनुनासिको वेति ।** यरः अनुनासिके अनुनासिकः वा इति चतुष्पदं सूत्रम् । यर इति षष्ठ्यन्तं पदम्, तेन यरः स्थाने । पदान्तस्येत्यनुवर्तते । **यर इति ।** पदान्तस्य=पदान्तस्थस्य । यरः=यर्वर्णानाम् । अनुनासिके=ञमङणनादिवर्णेषु । परे=परतः । वा=विकल्पेन । अनुनासिकः=अनुनासिकरूपम् । स्यात् ।

**एतन्मुरारिः**—एतद् मुरारिः इति स्थिते, अनुनासिकवर्णमकारपरत्वेन पदान्तत्वेन यर्वर्णत्वेन च दस्य 'यरोऽनुनासिकेऽनुनासिको वा' इति अनुनासिके, तेषु आन्तरतम्यात् नकारे, एतन्मुरारिः इति । अनुनासिकस्य वैकल्पिकत्वात् तदभावपक्षे एतद् मुरारिः इति ।

---

'ष्टुना ष्टुः' से प्राप्त ट्ुत्व का तवर्ग से षकार के परे होने के कारण 'तोः षि' से उसका निषेध होने से 'सन्षष्ठः' रूप सिद्ध हो गया ।

**झलां जशोऽन्त इति ।** पदान्त में रहे झल् के स्थान में जश् हो ।

**वागीशः**—'वाक् ईशः' ऐसी स्थिति में पदान्त में रहे क् का 'झलां जशोऽन्ते' से जश् होकर अन्तरतम होने से क के स्थान में गकार होने से 'वागीशः' रूप सिद्ध हुआ ।

**यरोऽनुनासिकेऽनुनासिको वेति ।** पदान्त में रहे अनुनासिक का अनुनासिक वर्ण के परे होने पर विकल्प से अनुनासिक होता है ।

**एतन्मुरारिः**—'एतद् मुरारिः' इस स्थिति में द् के पदान्त में रहने एवं यर् प्रत्याहार में होने के कारण मकार परवर्ती होने से 'यरोऽनुनासिकेऽनुनासिको

( ६० ) तोर्लि ८।४।६० ।। परसवर्णः । तल्लयः ।

( ६१ ) उदः स्थास्तम्भोः पूर्वस्य ८।४।६१ ।। उदः परयोः स्थास्तम्भोः पूर्वसवर्णः ।

---

**प्रत्यये** इति । प्रत्यये = अनुनासिकादौ प्रत्यये परे । भाषायां=वेदेतरशब्दे । नित्यं = नित्यं यरोऽनुनासिक इति ।

**तन्मात्रम्**—तद् मात्रमिति स्थिते, मकारे परे दकारस्य यरोऽनुनासिके परे 'यरोऽनुनासिकेऽनुनासिको वा' इति विकल्पेनानुनासिके, मात्रस्य प्रत्ययत्वात् 'प्रत्यये भाषायां नित्यमि'ति नित्यानुनासिके, तन्मात्रमिति ।

**चिन्मयम्**—चित् मयम् इति स्थिते, मकारे परे दकारस्य यरोऽनुनासिके परे 'यरोऽनुनासिकेऽनुनासिको वा' इति विकल्पेनानुनासिके, मयस्य प्रत्ययत्वात् 'प्रत्यये भाषायां नित्यमि'ति नित्यानुनासिके नकारे, चिन्मयमिति ।

**तोर्लि इति** । तोः लि द्विपदमिदं सूत्रम् । परसवर्ण इत्यनुवर्तते । तोः = तवर्गस्य । लि = लकारे परे । परसवर्णः = यादृशो लकारस्तादृश एव लकार इति ।

**तल्लयः**—तद् लयः इति स्थिते, दकारस्य लकारपरत्वेन 'तोर्लि' इति परसवर्णेन लकारे, तल्लयः इति ।

---

**वा'** से द् के स्थान में अन्तरतम अनुनासिक न होकर 'एतन्मुरारिः' हो गया । अनुनासिक के वैकल्पिक होने से उसके अभाव के पक्ष में 'एतद् मुरारिः' हो गया ।

भाषा में प्रत्यय परे रहने से अनुनासिक नित्य रूप से होता है ।

**तन्मात्रम्**—'तद् मात्रम्' ऐसी स्थिति में मात्र के प्रत्यय होने से 'द्' का नित्य अनुनासिक न होकर 'तन्मात्रम्' हो गया ।

**चिन्मयम्**—'चिद् मयम्' ऐसी स्थिति में मय के प्रत्यय होने से द् का नित्य अनुनासिक न होकर 'चिन्मयम्' हो गया ।

**तोर्लि इति** । तवर्ग का लकार परवर्ती होने से परसवर्ण होता है अर्थात् जैसा ल है वैसा ही ल तवर्ग के स्थान में होगा ।

**तल्लयः**—'तद् लयः' ऐसी स्थिति में द् का लकार परवर्ती होने से परसवर्ण होकर लकार हो गया एवं 'तल्लयः' हो गया ।

( ६२ ) तस्मादित्युत्तरस्य १।१।६७ ।। **पञ्चमीनिर्देशेन क्रियमाणं कार्यं वर्णान्तरेणाव्यवहितस्य परस्य ज्ञेयम् ।**

( ६३ ) आदेः परस्य १।१।५४ ।। **परस्य यद् विहितं तत्तस्यादेर्बोध्यम् । इति सस्य थः ।**

---

**उदः स्थास्तम्भोः पूर्वस्येति ।** त्रिपदमिदं सूत्रम् । सवर्णं इत्यनुवर्तते । उद इति पञ्चम्यन्तं पदम् । स्थास्तम्भोरिति षष्ठ्यन्तं पदम् । **उद इति ।** उदः = उदुपसर्गात् । परयोः = परवर्तिनोः । स्थास्तम्भोः = स्था स्तम्भ इत्येतयोः धात्वोः । पूर्वसवर्णः = पूर्वो यो वर्णस्तस्य सवर्णो वर्णः स्यात् ।

**तस्मादित्युत्तरस्येति ।** तस्मात् इति उत्तरस्य त्रिपदमिदं सूत्रम् । तस्मादिति सामान्येन पञ्चमीनिर्देशः ।

**पञ्चमीति ।** पञ्चमीनिर्देशेन = पञ्चमीविभक्त्याश्रयेण, यथा उद इत्यादि । क्रियमाणं = विधीयमानम् । कार्यं = यत्किञ्चिदादेशादि । वर्णान्तरेण = अन्येन वर्णेन । अव्यवहितस्य = अनावृतस्य । परस्य = परतः स्थितस्य । ज्ञेयं = बोध्यम् ।

**आदेः परस्येति ।** द्विपदमिदम् । परस्य आदेरिति ।

**परस्येति ।** परस्य = परवर्तिनः । यत् = कार्यम् । विहितं = नियतम् । तत् = परनिमित्तविहितकार्यम् । तस्य = परवर्तिनः । आदेः = प्रथमवर्णस्य । बोध्यं = ज्ञेयम् । **इतीति ।** इति = इति परिभाषया । सस्य = स्थास्तम्भगतसकारस्य । थः = थकारः । उद् स्थानम् उद् स्तम्भनम् इति स्थिते, 'उदः स्थास्तम्भोः पूर्वस्ये'ति सूत्रेण 'तस्मादित्युत्तरस्ये'ति परिभाषया उदः परवर्तिनः वर्णान्तरेणाव्यवहितस्य स्था इत्येतस्य स्तम्भ इत्येतस्य च पूर्वसवर्णे प्राप्ते 'आदेः परस्य' इति नियमेन परस्य स्था इत्येतस्य स्तम्भ इत्येतस्य च सकारस्य सः पूर्वसवर्णे प्राप्ते, पूर्वस्य दः सवर्णेषु त थ द ध न इत्येतेषु ( लकारस्य समानस्थानीयत्वेऽपि आभ्यन्तरप्रयत्नवैभिन्न्येन न तस्य दकारेण सावर्ण्यमेवं लकारस्यापि । सस्य विवार-

---

**उदः स्थास्तम्भोः पूर्वस्येति ।** उद् उपसर्ग से परे स्था एवं स्तम्भ का पूर्वसवर्ण हो ।

**तस्मादित्युत्तरस्येति ।** पञ्चमी विभक्ति के निर्देश से किया जाने वाला कार्य दूसरे वर्ण से अव्यवहित पर का समझ लेना चाहिए ।

**आदेः परस्येति ।** पर का जो कार्य विहित है वह उसके आदि के स्थान में हो । इससे स के स्थान में थकार होता है ।

( ६४ ) झरो झरि सवर्णे ८।४।६५ ॥ **हलः परस्य झरो वा लोपः सवर्णे झरि ।**

( ६५ ) खरि च ८।४।५५ ॥ **खरि झलां चरः स्युः । इत्युदो दस्य तः । उत्थानम् । उत्तम्भनम् ।**

---

श्वासाघोषत्वेन ) सस्य स्थाने विवारादिप्रयत्नवर्ति थकारे, उद् थ थानम्, उद् थ तम्भनम् इति जाते—-

**झरो झरि सवर्णे इति ।** त्रिपदमिदं सूत्रम् । झर इति षष्ठ्यन्तम् । वा लोप इत्यनुवर्तते । सवर्णे झरि झरो वा लोपः इति । हल इत्यप्यनुवर्तते । हल **इति ।** हलः = हल्वर्णात् । परस्य = परतः स्थितस्य । झरः = झर्वर्णस्य । वा = विकल्पेन । लोपः = अदर्शनम् । स्यात् । सवर्णे = तुल्यास्यप्रयत्ने । झरि = झर्वर्णे । परे = परतः स्थिते । इति हलः दकारात्परस्य झरः = थकारस्य सवर्णे झरि थकारे तकारे च परे लोपे, उद् थानम् उद् तम्भनम् इति जाते—-

**खरि चेति ।** झलामिति चर् इति चानुवर्तते । द्विपदमिदम् । खरि च झलां चर इति । **झलामिति ।** झलां = झल्वर्णानाम् । खरि = खर्वर्णे परतः । चरः = चर्वर्णाः । स्युः । इति = इत्यनेन । उदः = उद् इत्येतस्य । दस्य = दकारस्य । तः = तकारः । इति थकारे तकारे च खरि परे दस्य तकारे—उत्थानम्, उत्तम्भनम् । थलोपस्य विकल्पेन लोपाभावपक्षे तु परत्वेन उद् थ् थानम्, उद् थ् तम्भनम् इति जाते; दकारस्य थकारे परे चर्त्वे, उत्थ् थानम्, उत्थ् तम्भनम् इत्येव; न तु थस्य चर्त्वं, चर्त्वं प्रति थकारस्यासिद्धत्वात् । ( 'खरि चे'त्यपेक्षया उद इति सूत्रस्य परत्वेन पूर्वं प्रति परशास्त्रस्यासिद्धत्वात् । )

---

**झरो झरि सवर्णे इति ।** हल् से परे झर् का विकल्प से लोप हो, सवर्ण झर् के परवर्ती होने पर ।

**खरि चेति ।** खर् वर्ण परे रहने से झल् के स्थान में चर् हो । इससे उद् के दकार का त होता है । उत्थानम् । उत्तम्भनम् ।

**उत्थानम्**—'उद् स्थानम्' ऐसी स्थिति में 'उदः स्थास्तम्भोः पूर्वस्य' से 'तस्मादित्युत्तरस्य' इस परिभाषा से स्था के स्थान में पूर्वसवर्ण के होने पर 'आदेः परस्य' से सकार के स्थान में होकर पूर्ववर्ती द के सवर्णों में से अघोष महाप्राण स के स्थान में उसी तरह के थकार के आ जाने से 'उद् थ् थानम्' होने पर थकार का 'झरो झरि सवर्णे' से विकल्प से लोप होने पर एवं दकार का

( ६६ ) झयो होऽन्यतरस्याम् ८।४।६२ ॥ **झयः परस्य हस्य वा पूर्वसवर्णः। नादस्य घोषस्य संवारस्य महाप्राणस्य हस्य तादृशो वर्गचतुर्थः। वाग्घरिः, वाग्हरिः ।**

---

तदयं सङ्क्षेपः-उद् स्थानम्, उद् स्तम्भनम् इति स्थिते; 'उदः स्थास्तम्भोः पूर्वस्य' इति सूत्रेण 'तस्मादित्युतरस्य' इति परिभाषया स्थानम् स्तम्भनम् इत्यनयोः 'आदेः परस्य' इति परिभाषया सकारयोः पूर्वसवर्णे कृते, पूर्वस्य दस्य सवर्णेषु अघोषस्य महाप्राणस्य सस्य तादृशे थकारे, उद् थ् थानम्, उद् थ् तम्भनम् इति जाते; थस्य हल्परत्वेन 'झरो झरि सवर्णे' इति पाक्षिके लोपे, दस्य 'खरि चे'ति चर्त्वे, उत्थानम्, उत्तम्भनम् इति। लोपाभावपक्षे तु दस्य चर्त्वे, उत्थ्थानम् उत्थ्तम्भनम्, न तु थस्य 'खरि चे'ति चर्त्वं, तत्प्रति 'उदः०' सूत्रस्य परत्वेन थकारस्यैवासिद्धत्वात्।

**झयो होऽन्यतरस्याम् इति।** झयः हः अन्यतरस्याम् त्रिपदमिदं सूत्रम्। पूर्वसवर्ण इत्यनुवर्तते। झयः इति पञ्चम्यन्तं पदम्। ह इति षष्ठ्यन्तं पदम्। **झय इति।** झयः = झय्वर्णात्। परस्य = परवर्तिनः। हस्य = हकारस्य। वा = विकल्पेन। पूर्वसवर्णः। इति। **नादस्येति।** बाह्यप्रयत्नेषु नादस्य घोषस्य संवारस्य महाप्राणस्य = इति विशिष्टस्य हस्य। तादृशः = नादघोषसंवारमहाप्राणप्रयत्नवान्। वर्गचतुर्थः = वर्गे चतुर्थो वर्णः।

**वाग्घरिः**—वाक् हरिः इति स्थिते, ककारस्य 'झलां जशोऽन्ते' इति जश्त्वेन

---

'खरि च' से चर्त्व होने पर 'उत्थानम्' हुआ। थलोप के अभाव के पक्ष में द् का चर्त्व होकर 'उत्थ्थानम्' हो गया। थकार का चर्त्व नहीं होता, क्योंकि चर्त्व की दृष्टि में 'उदः०' सूत्र के पर होने से असिद्ध होता है।

**उत्तम्भनम्**—'उद् स्तम्भनम्' ऐसी स्थिति में सकार का पूर्वसवर्ण होकर थकार होने से उ द् थ् तम्भनम्, थ का लोप होकर द का चर्त्व होने से 'उत्तम्भनम्' हो गया। थकार के लोप के अभाव में दकार का चर्त्व होने से उत्थ्तम्भनम् हुआ। थ् का चर्त्व नहीं होता, क्योंकि 'खरि च' की दृष्टि में 'उदः०' सूत्र असिद्ध होता है।

**झयो होऽन्यतरस्यामिति।** झय् प्रत्याहार के वर्ण से परे हकार का विकल्प से पूर्वसवर्ण हो। नाद, घोष, संवार एवं महाप्राण 'ह' का उसी स्तर का वर्ग का चौथा वर्ण होगा।

( ६७ ) **शश्छोऽटि ८।४।६३ ॥ पदान्तात् झयः परस्य शस्याटि छो वा । तच्छिवः । तच्‌शिवः । छत्वममीति वाच्यम् ( वा० ) । तच्छ्लोकेन ।**

---

गकारे, वाग् हरिः इति जाते, 'झयो होऽन्यतरस्याम्' इति सूत्रेण झय्प्रत्याहारान्तःपातिनो गकारात्परत्वेन हकारस्य 'झयो होऽन्यतरस्याम्' इति विकल्पेन पूर्वसवर्णेन पूर्ववर्तिनो गकारस्य सवर्णेषु कादिषु अह्विसर्गवर्जेषु तेषां प्रयत्नवैभिन्न्यात् घोषमहाप्राणस्य हस्य तादृशे एव वर्णे घकारे, वाग्घरिः इति । पूर्वसवर्णस्य वैकल्पिकत्वेन तदभावे वाग्हरिः इति ।

**शश्छोऽटीति** । शः छः अटि त्रिपदमिदं सूत्रम् । पदान्तादिति झय इति चानुवर्तते झय इति वेति च । श इति षष्ठ्यन्तं पदं, तेन शस्य स्थाने । **पदान्तादिति** । पदान्तात्=पदान्तस्थात् । झयः=झय्वर्णात् । परस्य=परवर्तिनः । शस्य=शकारस्य । अटि=अट्वर्णे परे । वा=विकल्पेन । छः=छकार इति ।

**तच्छिवः**—तद् शिवः इति स्थिते, दकारस्य शकारेण योगे 'स्तोः श्चुना श्चुः' इति चुत्वे, आन्तरतम्यात् जकारे, जस्य शे परे 'खरि चे'ति चर्त्वेन चकारे, तच् शिव इति जाते, 'शश्छोऽटि' इति झय्प्रत्याहारान्तःपातिनश्चकारात्परस्य अट्परस्य शस्य छत्वे, तच्छिवः इति । छत्वस्य वैकल्पिकत्वेन तदभावपक्षे तच् शिव इति ।

**छत्वममीति वाच्यमिति** । झयः परस्य शस्य छत्वं स्यादमि परे ।

---

**वाग्घरिः**—'वाक् हरिः' ऐसी स्थिति में क् का 'झलां जशोऽन्ते' से जश्त्व होकर 'वाग् हरिः' हो गया एवं हकार का झय् प्रत्याहार में पड़ने वाले ग से परवर्ती होने के कारण 'झयो होऽन्यतरस्याम्' से पूर्वसवर्ण हुआ, पूर्वसवर्ण में ग् के सवर्णों में से घोष एवं महाप्राण ह का उसी तरह वर्ण घ हुआ एवं 'वाग्घरिः' हो गया । पूर्वसवर्ण के वैकल्पिक होने से उसके न होने के पक्ष में 'वाग्हरिः' हो गया ।

**शश्छोऽटीति** । पदान्त में रहे झय् प्रत्याहार के वर्ण से परे 'श' का अट् प्रत्याहार के वर्ण से परे रहने पर छत्व विकल्प से हो ।

**तच्छिवः**—'तद् शिवः' इस स्थिति में शकार के योग में दकार का चुत्व होकर ज् एवं ज् का चर्त्व होकर च् होकर 'तच् शिवः' हो जाने पर 'शश्छोऽटि' से श का छत्व होने पर 'तच्छिवः' रूप सिद्ध हुआ । छत्व के वैकल्पिक होने से

( ६८ ) मोऽनुस्वारः ८।३।२३ ॥ **मान्तस्य पदस्यानुस्वारो हलि । हरिं वन्दे ।**

( ६९ ) नश्चापदान्तस्य झलि ८।३।२४ ॥ **नस्य मस्य चापदान्तस्य झल्यनुस्वारः । यशांसि । आक्रंस्यते ।**

---

**तच्छ्लोकेन**—तद् श्लोकेन इति स्थिते, शकारेण योगे, दस्य चुत्वेन अन्तरतमे जकारे, जस्य 'खरि चे'ति चर्त्वेन चकारे, तच् श्लोकेन इति जाते, शस्य झयन्तःपातिनश्चकारात्परत्वेन अम्परत्वेन च 'छत्वममी'ति छत्वे, तच्छ्लोकेन इति ।

**मोऽनुस्वार इति ।** मः अनुस्वारः द्विपदमिदं सूत्रम् । म इति षष्ठ्यन्तं पदम् । तेन 'येन विधिस्तदन्तस्ये'ति मान्तस्य पदस्येति । हलि इत्यनुवर्तते । **मान्तस्येति ।** मान्तस्य = मकारान्तस्य । पदस्य । अनुस्वारः । हलि = हल्वर्णे परतः ।

**हरिं वन्दे**—हरिम् वन्दे इति स्थिते, हल्प्रत्याहारान्तःपातिनि वकारे परे मान्तस्य पदस्य हरिम् इत्येतस्य मः स्थानेऽनुस्वारे, हरिं वन्दे इति ।

**नश्चापदान्तस्य झलीति ।** नः च अपदान्तस्य झलि चतुष्पदमिदं सूत्रम् । नः इति षष्ठ्यन्तं पदम् । अनुस्वार इत्यनुवर्तते । **नश्चेति ।** अपदान्तस्य = पदान्तागतस्य । नस्य = नकारस्य । मस्य = मकारस्य । च = अपि । झलि = झल्वर्णे परतः । अनुस्वारः = अनुस्वारादेश इति ।

---

उसके अभाव में 'तच् शिवः' हुआ । अम् परे होने से भी झय् से परे 'श' का छत्व हो ।

**तच्छ्लोकेन**—'तद् श्लोकेन' ऐसी स्थिति में दकार का शकार के योग में चुत्व होकर अन्तरतम ज् एवं ज् का चर्त्व होने पर अन्तरतम च होने पर 'तच् श्लोकेन' हो जाने पर झय् के परवर्ती होने एवं अम् ( ल ) के पूर्ववर्ती होने से श का 'छत्वममी'ति से छत्व होने पर 'तच्छ्लोकेन' सिद्ध हो गया ।

**मोऽनुस्वार इति ।** मान्त पद का अनुस्वार हो, हल् वर्ण के परे रहने से ।

**हरिं वन्दे**—'हरिम् वन्दे' ऐसी स्थिति में हल्वर्ण के परे रहने से य् का 'मोऽनुस्वारः' से अनुस्वार हो जाने से 'हरिं वन्दे' रूप सिद्ध हुआ ।

**नश्चापदान्तस्य झलीति ।** अपदान्त नकार एवं मकार का झल् वर्ण के परे रहने से अनुस्वार हो ।

( ७० ) अनुस्वारस्य ययि परसवर्णः । ८।४।५८ ॥ स्पष्टम् । शान्तः ।
( ७१ ) वा पदान्तस्य ८।४।५९ ॥ त्वङ्करोषि, त्वं करोषि ।

---

**यशांसि**—यशान् सि इति स्थिते, नः झल्परत्वेनापदान्तत्वेन च 'नश्चापदान्तस्य झलि' इति अनुस्वारे, यशांसि इति सिद्धम् ।

**आक्रंस्यते**—आक्रम् स्यते इति स्थिते, मः अपदान्तत्वेन झल्परत्वेन च 'नश्चापदान्तस्य झलि' इत्यनुस्वारादेशे, आक्रंस्यते इति सिद्धम् । झलि इत्येव । यमि परे तु तन्यते तन्वते तन्मः ।

**अनुस्वारस्य ययि परसवर्ण इति ।** त्रिपदमिदं सूत्रम् । अनुस्वारस्य परसवर्णः ययि । नित्यमपदान्ते इति । तेन अनुस्वारस्य नित्यं परसवर्णः अपदान्ते ययि=यय्प्रत्याहारान्तःपातिनि वर्णे परतः ।

**शान्तः**—शाम् त इति स्थिते, मोऽपदान्तत्वेन झल्परत्वेन च 'नश्चापदान्तस्य झली'ति अनुस्वारे, अनुस्वारस्य यय्परत्वेन 'अनुस्वारस्य ययि परसवर्णः' इति परसवर्णेन आन्तरतम्यान्नकारे, शान्त इति ।

**वा पदान्तस्येति ।** द्विपदमिदं सूत्रम् । पदान्तस्य अनुस्वारस्य ययि परसवर्णः स्याद्वा ।

---

**यशांसि**—'यशान् सि' ऐसी स्थिति में न् के अपदान्त एवं झल् वर्ण के परवर्ती होने से 'नश्चापदान्तस्य झलि' से नकार का अनुस्वार होने पर 'यशांसि' सिद्ध हुआ ।

**आक्रंस्यते**—'आक्रम् स्यते' ऐसी स्थिति में मकार के अपदान्त होने एवं झल्परवर्ती होने से म का 'नश्चापदान्तस्य झलि' से अनुस्वार होने पर 'आक्रंस्यते' रूप बना ।

**अनुस्वारस्य ययि परसवर्ण इति ।** यय् प्रत्याहार का वर्ण परवर्ती होने पर अनुस्वार का परसवर्ण हो ।

**शान्तः**—'शाम् तः' ऐसी स्थिति में म् के झल्वर्ण परवर्ती होने से 'नश्चापदान्तस्य झलि' से अनुस्वार होकर 'शांतः' एवं अनुस्वार का यय् वर्ण परे होने से 'अनुस्वारस्य ययि परसवर्णः' से परसवर्ण होकर अन्तरतम होने से अनुस्वार के स्थान में न होकर 'शान्तः' हो गया ।

**वा पदान्तस्येति ।** पदान्त में रहे अनुस्वार का यय् प्रत्याहार का वर्ण परवर्ती होने पर विकल्प से परसवर्ण हो ।

( ७२ ) ङः सि धुट् ८।३।२९ ।। **ङात्परस्य सस्य धुड् वा ।**

( ७३ ) आद्यन्तौ टकितौ १।१।४६ ।। **टित्कितौ यस्योक्तौ तस्य क्रमादाद्यन्तावयवौ स्तः । षट्त्सन्तः, षट् सन्तः ।**

---

**त्वङ्करोषि, त्वं करोषि**—त्वम् करोषि इति स्थिते, मः हल्परत्वेन 'मोऽनुस्वारः' इति अनुस्वारेऽनुस्वारस्य यय्परत्वेन 'वा पदान्तस्य' इति विकल्पेन परसवर्णे, आन्तरतम्यात् मकारस्य ङकारे, त्वङ्करोषि इति । पक्षे परसवर्णाभावे त्वं करोषि इति ।

यवलपरेऽनुस्वारस्य परसवर्णे सानुनासिक-यवला भवन्ति । पुं लिङ्गः पुल्लिङ्गः । किं युक्तः किय्युँक्तः ।

**ङ सि धुट् इति** । त्रिपदमिदं सूत्रम् । ङ इति पञ्चम्यन्तं पदम्, सि इति सप्तम्यन्तं पदम् । उभयनिर्देशे पञ्चमीनिर्देशो बलीयानिति ङः इति पञ्चम्याः प्राबल्येन 'तस्मादित्युत्तरस्ये'ति परिभाषया सि इति सप्तमी षष्ठी । तेन ङः सि इति ङात्परस्य सस्येति । वा इत्यनुवर्तते । **ङात्परस्येति** । ङात्=ङकारात् । परस्य=परवर्तिनः वर्णान्तरेणाव्यवहितत्वेनोत्तरवर्तिनः । सस्य=सकारस्य । वा=विकल्पेन । धुट्=धुडागमः ।

**आद्यन्तौ टकिताविति** । द्विपदमिदं सूत्रम् । आदिश्च अन्तश्च तौ । टकितौ—टश्च क् च टकौ, तौ इतौ ययोस्तौ टकितौ=टित्किताविति । **टित्किताविति** । टित्कितौ=टः इत् यस्य टित् टित् कित् च तौ आगमौ । यस्य=वर्णस्य ।

---

**त्वङ्करोषि, त्वं करोषि**—'त्वम् करोषि' ऐसी स्थिति में मकार का 'मोऽनुस्वारः' से अनुस्वार होने पर 'त्वं करोषि' एवं 'वा पदान्तस्य' से परसवर्ण होने से म के स्थान में पञ्चम वर्ण ङ् होकर 'त्वङ्करोषि' तथा परसवर्ण के वैकल्पिक होने से उसके अभाव में 'त्वं करोषि' रूप सिद्ध हुआ ।

**ङः सि धुट् इति** । यह तीन पदों से युक्त सूत्र है । ङः पञ्चमी तथा सि सप्तमी का पद है । जहाँ दो विभक्तियों का निर्देश होता है, वहाँ पञ्चमी विभक्ति द्वारा प्राप्त निर्देश बलवान् होता है । अतः ङः इस पञ्चमी निर्देश से 'तस्मादित्युत्तरस्य' इस परिभाषा से ङ से परवर्ती एवं वर्णान्तर से अव्यवहित स को विकल्प से धुट् आगम हुआ ।

**आद्यन्तौ टकिताविति** । यह द्विपद सूत्र है, आदि और अन्त=आद्यन्त । ट् क् हैं इत्संज्ञक जिसमें, वह टकित् हुआ । टित्-कित् संज्ञा जिस वर्ण की हो उस वर्ण के क्रम से वे आदि एवं अन्त के अवयव होते हैं ।

( ७४ ) नश्च ८।३।३० ।। नान्तात्परस्य सस्य धुड् वा। सन्त्सः, सन्सः ।

---

उक्तौ = कथितौ । तस्य = वर्णस्य । क्रमात् = अनुक्रमेण । आद्यन्तावयवौ=आदिश्चान्तश्च तौ अवयवौ भागौ टिदादेरवयवः किदन्तस्यावयव इति ।

**षट्त्सन्तः**—षड् सन्तः इति स्थिते, सस्य डात्परत्वेन 'डः सि धुट्' इति धुडागमे, टस्य 'हलन्त्यमि'ति उकारस्य 'उपदेशेऽजनुनासिक इदि'ति इत्संज्ञायां, 'तस्य लोपः' इति लोपे, धुटः टित्त्वेन साश्रयत्वेन च सकारस्य आद्यवयवत्वेन स्थिते षड् ध् सन्तः इति जाते, धस्य सकारे परे चर्त्वे, षड् त्सन्त इति जाते, डकारस्य च चर्त्वेन टकारे, षट्त्सन्तः इति । धुटः वैकल्पिकत्वेन तदभावपक्षे षट् सन्तः इत्येव ।

**नश्चेति** । नः च द्विपदमिदं सूत्रम् । सि धुट् इत्यनुवर्तते । नः इति पञ्चम्यन्तं पदम् । तेन सीति षष्ठी सस्येति । न इति येन विधिस्तदन्तस्येति नान्तात् । **नान्तादिति** । नान्तात् = न अन्ते यस्य तस्मात् तादृशात् पदात् । परस्य = अव्यवहितत्वेन परवर्तिनः । सस्य = सकारस्य । धुट्=धुडागमः । वा । इति ।

**सन्त्सः**—सन् सः इति स्थिते, नकारात्परस्य सकारस्य 'नश्च' इति धुडा-

---

**षट्त्सन्तः**—'षड् सन्तः' इस स्थिति में स के डात्पदत्व होने से 'डः सि धुट्' इस सूत्र से धुट् आगम होने पर ट् की 'हलन्त्यम्' सूत्र से और 'उ' की 'उपदेशेऽजनुनासिक इत्' से इत्संज्ञा होकर इन दोनों का 'तस्य लोपः' सूत्र से लोप हो जाने पर धुट् के टित्त्व होने से और स के आदि अवयव होने पर 'षड् ध् सन्तः' रूप होने पर ध के स के परे चर्त्व होने पर 'षड्त्सन्तः' होने पर ड के चर्त्व होने से ट् हो जाने पर 'षट्त्सन्तः' रूप हुआ । धुट् के विकल्प से होने की स्थिति में उसके अभाव पक्ष में 'षट् सन्तः' रूप बना ।

**नश्चेति** । नः च इस प्रकार यह दो पदों वाला सूत्र है, पूर्वसूत्र से सि धुट् इसकी यहाँ अनुवृत्ति हुई है । नः यह पञ्चम्यन्त पद है, सि यह षष्ठ्यन्त पद है, जिससे जो विधि होती है, वह उसके अन्त को होती है, अतः यह नान्त कहा कहा जायेगा । इसका अर्थ है—न है अन्त में जिसके उस पद से, परस्य का अर्थ है अव्यवहित परवर्ती । सकार के स्थान पर विकल्प से धुट् आगम होता है ।

**सन्त्सः**—'सन् सः' इस स्थिति में न से परे सकार को 'नश्च' सूत्र से धुट्

**( ७५ ) शि तुक् ८।३।३१।। पदान्तस्य नस्य शे परे तुग्वा । सञ्छम्भुः, सञ्च्छम्भुः, सञ्चशम्भुः, सञ्शम्भुः ।**

---

गमे, इस्य उकारस्य चानुबन्धलोपे, धुटः टित्त्वेन सकाराश्रयत्वेन सस्याद्यवयवत्वेन स्थिते, सन् ध्सः इति जाते, धः सकारे परे 'खरि चे'ति चर्त्वेन तकारे, सन्त्सः इति । धुटो वैकल्पिकत्वेन तदभावपक्षे सन्स इति ।

**शि तुक् इति** । द्विपदमिदं सूत्रम् । नः इत्यनुवर्तते षष्ठ्यन्तत्वेन तुकोऽनुरोधात् । नस्य शि तुक् इति । **पदान्तस्येति** । पदान्तस्य=पदान्तगतस्य । नस्य =नकारस्य । शे=तालव्यशकारे । परे=परतः स्थिते । वा=विकल्पेन । तुक्=तुगागमः ।

**सञ्छम्भुः, सञ्च्छम्भुः, सञ्चशम्भुः, सञ्शम्भुः**—सन् शम्भुरिति स्थिते, शकारपरत्वेन 'शि तुक्' इति नकारस्य तुगागमे, ककारस्योकारस्य च इत्संज्ञालोपयोः, तुकः कित्त्वेन नकाराश्रयत्वेन च 'आद्यन्तौ टकितौ' इति परिभाषया नः अन्तावयवत्वेनावस्थाने सन्त् शम्भुरिति जाते, तः शयोगेन चुत्वे, सन् च् शम्भुरिति जाते, नः च योगेन चुत्वे, सञ्च् शम्भुरिति जाते, शकारस्य झयः परत्वेन 'शश्छोऽटि' इति वैकल्पिके छत्वे, सञ्च्छम्भुरिति जाते, चकारस्य 'झरो

---

आगम हुआ तथा उ का अनुबन्धलोप हो जाने पर धुट् का टित्व तथा सकार का आश्रय होने से और स का आदि अवयव होने से 'सन् ध् सः' ऐसी स्थिति में ध् के सकार से परे होने पर 'खरि च' सूत्र से चर्त्व होने से त् हो गया, तब 'सन्त्सः' रूप बना । धुट् के विकल्प पक्ष में 'सन्सः' यह रूप बना ।

**शि तुक् इति** । पदान्त में रहे नकार का शकार परे रहने से विकल्प से तुक् आगम हो ।

**सञ्छम्भुः, सञ्च्छम्भुः, सञ्चशम्भुः, सञ्शम्भुः**—'सन् शम्भुः' ऐसी स्थिति में शकार परे होने के कारण नकार का 'शि तुक्' से तुक् आगम हुआ और क् एवं 'उ' के इत्संज्ञा होकर लोप होने से त् रह गया तथा तुक् के कित् होने एवं न का आश्रय वाला होने के कारण सन् के अन्त में जुड़ गया एवं 'सन्त् शम्भुः' हो गया । तब श के योग में त का चुत्व होकर च् हो गया तथा च् के योग में न का चुत्व होकर ञ् हो गया, तब 'सञ्च् शम्भुः' हो गया । फिर श का 'शश्छोऽटि' से छत्व हो जाने से 'सञ्च्छम्भुः' हो गया । तब चकार का 'झरो झरि सवर्णे' से लोप होने पर 'सञ्छम्भुः' हो गया । लोप के वैकल्पिक

**( ७६ ) छे च ६।१।७३।। ह्रस्वस्य छे तुक् । शिवच्छाया ।**

**( ७७ ) पदान्ताद्वा ६।१।७६।। दीर्घात्पदान्तात् छे तुग्वा । लक्ष्मीच्छाया, लक्ष्मीछाया ।**

**इति हल्सन्धिः ।**

---

झरि सवर्णे' इति लोपे, सञ्छम्भुः इति । लोपस्य वैकल्पिकत्वेन तदभावपक्षे सञ्छम्भुः, छत्वस्य विकल्पेन तदभावपक्षे सञ्चशम्भुः, तुगागमस्य विकल्पेन तदभावपक्षे नः चुत्वे सञ्शम्भुः इति । तेन त्रीणि सतुग्रूपाणि एकं निस्तुग्रूपम्—

'ञछौ ञचछाः ञचशा ञशाविति चतुष्टयम् ।
रूपाणामिह तुक्छत्वचलोपानां विकल्पनात्' ।।

**छे चेति** । द्विपदमिदम् । ह्रस्वस्येति तुक् इति चानुवर्तते । **ह्रस्वस्येति** । ह्रस्वस्य=एकमात्रिकस्य । छे=छवर्णे । परे=परतः स्थिते । तुक्=तुगागमः ।

**शिवच्छाया**—शिव छाया इति स्थिते, 'छे च' इति तुकि अनुबन्धलोपे ( ककारोकारलोपे ), तुकः कित्त्वेन शिवगताकाराश्रयत्वेन च तदन्तावयवत्वेनावस्थाने शिवत् छाया इति जाते, तः छकारेण योगेन चुत्वे समाने चकारे, शिवच्छाया इति ।

**पदान्ताद्वेति** । तुगिति छे इति दीर्घादिति चानुवर्तते । द्विपदमिदं सूत्रम् । **दीर्घादिति** । दीर्घात्=द्विमात्रिकात् । पदान्तात् । छे=छकारे परे । वा । तुक् =तुगागमः ।

---

होने से उसके अभाव के पक्ष में 'सञ्च्छम्भुः' ही रह गया । छत्व के विकल्प से होने से उसके अभाव के पक्ष में 'सञ्चशम्भुः' हो गया । तुक् के भी वैकल्पिक होने से उसके अभाव के पक्ष में 'सन् शम्भुः' रह कर नकार का शकार के योग में चुत्व होने से 'सञ्शम्भुः' हो गया ।

**छे चेति** । ह्रस्व का छकार परे होने से तुक् हो ।

**शिवच्छाया**—'शिव छाया' ऐसी स्थिति में 'छे च' से तुक् हो गया, क एवं उ की इत्संज्ञा तथा लोप हो जाने पर त रहकर 'शिवत् छाया' हो गया, त का छकार के योग में चुत्व होकर च् हो जाने से 'शिवच्छाया' हो गया ।

**पदान्ताद्वेति** । दीर्घ पदान्त से छकार परे होने से तुक् विकल्प से हो ।

## अथ विसर्गसन्धिः

( ७८ ) ससजुषो रुः ८।२।६६ ।। **पदान्तस्य सस्य सजुषश्च रुः स्यात् ।**

( ७९ ) खरवसानयोर्विसर्जनीयः ८।३।१५ ।। **खरि अवसाने च पदान्तस्य रेफस्य विसर्गः स्यात् ।**

---

**लक्ष्मीच्छाया, लक्ष्मीछाया**—लक्ष्मी छाया इति स्थिते, 'पदान्ताद्वा' इति तुगागमे अनुबन्धलोपे, तकारस्य चुत्वे, लक्ष्मीच्छाया इति । तुगभावपक्षे लक्ष्मी-छाया इति ।

इति व्यञ्जनसन्धिर्वै सङ्क्षेपेण निरूपितः ।
सारसिद्धान्तकौमुद्याः प्रणेत्रा यन्निदर्शितः ।। १ ।।
सिद्धान्तकौमुदीं येन सङ्क्षिप्य विहिता विदा ।
ता मध्यलघुसाराख्यकौमुद्यस्तं सदा नुमः ।। २ ।।

**इति हलसन्धिः**

---

व्याख्याय सोदाहरणं हल्सन्धि मूलवर्त्मना ।
विसर्गसन्धिविवृतौ लेखन्येषा प्रसर्पति ।।

**ससजुषो रुरिति ।** ससजुषोरिति षष्ठ्यन्तं पदम् । पदान्तस्येत्यनुवर्तते । **पदान्तस्येति ।** पदान्तस्य = पदान्तस्थस्य । सस्य = सकारस्य । सजुषः=सजुषः षस्य च 'येनविधिस्तदन्तस्ये'ति । रुः । स्यात् इति ।

**खरवसानयोरिति ।** द्विपदमिदं सूत्रम् । खरवसानयोरिति सप्तम्यन्तं पदम् ।

---

**लक्ष्मीच्छाया, लक्ष्मीछाया**—'लक्ष्मी छाया' ऐसी स्थिति में 'पदान्ताद् वा' से तुक् आगम हो गया एवं क तथा उ के इत्संज्ञा तथा लोप से त् रहकर 'लक्ष्मीत् छाया' हो गया, त् का छकार के योग में चुत्व होने पर 'लक्ष्मीच्छाया' एवं तुक् के अभाव में 'लक्ष्मीछाया' हो गया ।

नमो वरदराजाय सारसिद्धान्तकौमुदी ।
सारमादाय सिद्धान्तकौमुद्या येन निर्मिता ।।

हल्सन्धि समाप्त ।

---

**ससजुषो रुरिति ।** पदान्त में रहे सकार एवं सजुष् का रु हो ।

( ८० ) विसर्जनीयस्य सः । ८।३।३४ ॥ खरि विसर्जनीयस्य सः स्यात् । विष्णुस्त्राता ।

( ८१ ) वा शरि ८।३।३६ ॥ शरि विसर्गस्य विसर्गो वा स्यात् । हरिः शेते, हरिश्शेते ।

---

**खरीति** । खरि=खर्वर्णे परतः । अवसाने=वर्णाभावे च । पदान्तस्य । रेफस्य। विसर्गः=विसर्गादेशः ।

**विसर्जनीयस्येति** । द्विपदमिदं सूत्रम् । खरीत्यनुवर्तते । **खरीति** । खरि= खर्वर्णे परतः । विसर्जनीयस्य=विसर्गस्य । सः=सकारः स्यात् ।

**विष्णुस्त्राता**—विष्णुस् त्राता इति स्थितौ, सस्य पदान्तत्वेन 'ससजुषो रु'रिति रुत्वे, उकारस्येत्संज्ञायां लोपे, विष्णुर् त्राता इति जाते, रेफस्य खर्परत्वेन 'खरवसानयोर्विसर्जनीयः' इति विसर्जनीये, विष्णुः त्राता इति जाते, तस्य 'विसर्जनीयस्य सः' इति सकारे, विष्णुस्त्राता इति ।

**वा शरि इति** । द्विपदमिदं सूत्रम् । विसर्जनीयस्य विसर्ग इत्यनुवर्तते। शरि=शर्वर्णे परतः । विसर्गस्य । विसर्गः । वा । स्यात् ।

**हरिः शेते, हरिश्शेते**—हरिस् शेते इति स्थिते, सस्य पदान्तत्वेन 'ससजुषो रुरि'ति रुत्वे उकारस्येत्संज्ञायां लोपे च, खर्परत्वेन 'खरवसानयोर्विसर्जनीयः' इति विसर्गे, तस्य 'विसर्जनीयस्य सः' इति सकारे प्राप्ते, तं बाधित्वा शर्परत्वेन

---

**खरवसानयोर्विसर्जनीय इति**—खर् एवं अवसान परवर्ती होने से रेफ का विसर्ग हो ।

**विसर्जनीयस्य स इति** । खर् वर्ण परे होने से विसर्ग का स हो ।

**विष्णुस्त्राता**—'विष्णुस् त्राता' ऐसी स्थिति में सकार का पदान्त में होने के कारण 'ससजुषो रुः' से रु होकर रु के उकार की इत्संज्ञा एवं लोप होने पर रेफ के रह जाने से रेफ का खर्पर होने के कारण 'खरवसानयोर्विसर्जनीयः' से विसर्ग होकर 'विष्णुः त्राता' हो गया एवं उसका 'विसर्जनीयस्य सः' से स होने पर 'विष्णुस्त्राता' हो गया ।

**वा शरीति** । शर् वर्ण परे रहने से विसर्ग का विसर्ग विकल्प से हो ।

**हरिः शेते हरिश्शेते**—'हरिस् शेते' ऐसी स्थिति में स् का 'ससजुषो रुः' से रु, रेफ का 'खरवसानयोः०' से विसर्ग एवं विसर्ग का 'विसर्जनीयस्य सः' से स के प्राप्त होने पर शर्पर होने से 'वा शरि' से विसर्ग होने पर 'हरिः शेते'

**( ८२ ) कुप्वोः ≍ क ≍ पौ च ८।३।३७ ॥ कवर्गे पवर्गे च परे विसर्गस्य ≍ क ≍ पौ स्तः, चाद्विसर्गः । क ≍ करोति, कः करोति । क ≍ खनति, कः खनति । क ≍ पचति, कः पचति । क ≍ फलति, कः फलति ।**

---

'वा शरि' इति वैकल्पिकत्वेन विसर्गस्य विसर्गे, हरिः शेते इति । विसर्गस्य वैकल्पिकत्वेन पक्षे सकारे एवावस्थिते सः शकारयोगेन शत्वे, हरिश्शेते इति ।

( खर्परे शरि वा विसर्गलोपः । महिम्नस्तोत्रम्—महिम्नः स्तोत्रम्, महिम्नस्स्तोत्रम् । )

**कुप्वोः ≍ क ≍ पौ चेति ।** त्रिपदमिदं सूत्रम् । कुप्वोरिति सप्तमी । विसर्गस्य इत्यनुवर्तते । **कवर्गे इति ।** कवर्गे=कादिवर्गे । पवर्गे=पादिवर्गे । च । परे=परतः । विसर्गस्य=विसर्जनीयस्य । ≍ क ≍ पौ=एतौ जिह्वामूलीयोपध्मानीयौ । स्तः=भवतः । चात्=सूत्रे चकारपाठात् । विसर्गः ।

**क ≍ करोति, कः करोति**—कस् करोति इति स्थिते, सः 'ससजुषो रुरि'ति रुत्वे रेफे, तस्य खर्परत्वेन 'खरवसानयोर्विसर्जनीयः' इति विसर्गे, कः करोति इति जाते, 'विसर्जनीयस्य सः' इति विसर्गस्य सकारे प्राप्ते 'कुप्वोः ≍ क ≍ पौ चे'ति जिह्वामूलीये, क ≍ करोति इति । पक्षे विसर्गे—कः करोति ।

**क ≍ खनति, कः खनति**—कस् खनति इति स्थिते, सः रुत्वविसर्गे, पुनः सत्वे प्राप्ते 'कुप्वोरि'ति जिह्वामूलीये, क ≍ खनति इति । पक्षे विसर्गे—कः खनति ।

**क ≍ पचति, कः पचति**—कस् पचति इति स्थिते, सस्य पदान्तत्वेन रुत्वे, रेफस्य 'खरवसानयोरि'ति विसर्गे, विसर्गस्य 'विसर्जनीयस्य सः' इति सकारे प्राप्ते 'कुप्वोरि'ति उपध्मानीये, क ≍ पचति इति । पक्षे विसर्गे—कः पचति ।

---

हुआ । पक्ष मे स् ही होने एवं उसका शकार के योग में श्चुत्व होने से 'हरिश्शते' हो गया ।

**कुप्वोः ≍ क ≍ पौ चेति ।** कवर्ग एवं पवर्ग के परे रहने से विसर्ग का ≍ क एवं ≍ प हो ।

**क ≍ करोति, कः करोति**—'कस् करोति' ऐसी स्थिति में सकार का रु, रेफ का विसर्ग होकर विसर्ग का स प्राप्त होने पर 'कुप्वोः ≍ क ≍ पौ च' से पक्ष में जिह्वामूलीय होने से 'क ≍ करोति' हुआ । पक्ष में विसर्ग होने से 'कः करोति' हो गया ।

**( ८३ ) कस्कादिषु च ८।३।४८ ॥ एषु इण उत्तरस्य विसर्गस्य षः अन्यत्र तु सः । कस्कः । कौतस्कुतः । सर्पिष्कुण्डिका । धनुष्कपालमित्यादि ।**

---

**क ≍ फलति, कः फलति**—कस् फलति इति स्थिते, सस्य रुत्वेन रेफे, रेफस्य विसर्गे, विसर्गस्य सकारे प्राप्ते 'कुप्वोरि'ति उपध्मानीये, क ≍ फलति इति । पक्षे विसर्गे—कः फलति ।

**कस्कादिषु चेति** । द्विपदमिदं सूत्रम् । **एष्विति** । एषु = कस्कादिषु । इणः= इण्वर्णात्, परेण णकारेण इण्ग्रहणम् । उत्तरस्य=अनन्तरवर्तिनः । विसर्गस्य । षः = षादेशः । अन्यत्र = तदितरस्थले । तु = हि । सः = सादेशः ।

**कस्कः**—कस् कः इति स्थिते, सस्य रुत्वे, रेफस्य खर्परत्वेन विसर्गे 'विसर्जनीयस्ये'ति सकारे प्राप्ते, तं बाधित्वा 'कुप्वोरि'ति जिह्वामूलीये प्राप्ते, तस्यापवादेन 'कस्कादिषु चे'ति इणः उत्तरवर्तित्वाभावात् सकारे, कस्कः इति ।

**कौतस्कुतः**—कौतस् कुतः इति स्थिते, सस्य रुत्वे, रेफस्य विसर्गे, विसर्गस्य खर्परे सकारे प्राप्ते, तं बाधित्वा 'कुप्वोरि'ति जिह्वामूलीये प्राप्ते, तस्यापवादेन 'कस्कादिषु चे'ति सकारे, कौतस्कुतः इति ।

**सर्पिष्कुण्डिका** = सर्पिस् कुण्डिका इति स्थिते, सस्य रुत्वविसर्गे, सकारे प्राप्ते, तं बाधित्वा जिह्वामूलीये प्राप्ते, तस्यापवादेन इण्परत्वेन च 'कस्कादिषु चे'ति षकारे, सर्पिष्कुण्डिका इति ।

---

इसी तरह 'कस् खनति' में—क ≍ खनति, कः खनति । 'कस् पचति' में—क ≍ पचति, कः पचति । 'कस् फलति' में—क ≍ फलति, कः फलति आदि होते हैं ।

**कस्कादिषु चेति** । इन ( कस्कादि ) में इण् से उत्तर के विसर्ग का ष होगा और अन्यत्र तो स ही होगा ।

**कस्कः**—'कस् कः' ऐसी स्थिति में सकार का रु एवं रेफ का विसर्ग होकर विसर्ग का 'विसर्जनीयस्य सः' से सकार प्राप्त होने पर उसको बाधकर 'कुप्वोः०' से जिह्वामूलीय की प्राप्ति होने पर उसके अपवाद के रूप में 'कस्कादिषु च' से स होकर 'कस्कः' रूप सिद्ध हुआ ।

**कौतस्कुतः**—'कौतस् कुतः' में रुत्व-विसर्ग, स की प्राप्ति एवं जिह्वामूलीय की प्राप्ति होने पर उसके भी अपवाद के रूप में 'कस्कादिषु च' से स होकर 'कौतस्कुतः' हो गया ।

(८४) अतो रोरप्लुतादप्लुते ६।१।११३ ।। **अप्लुतादतः परस्य रोरुः स्यादप्लुतेऽति । शिवोऽर्च्यः ।**

(८५) हशि च ६।१।११४ ।। **तथा । शिवो वन्द्यः ।**

---

**धनुष्कपालम्**—इण्परत्वेन षः ।

**अतो रोरिति** । अतः रोः अप्लुतात् अप्लुते चतुष्पदमिदं सूत्रम् । उत् इत्यनुवर्तते अति इति विवक्षितम् । रोरिति षष्ठ्यन्तं पदम् । अप्लुतात् अतः रोः उत् अप्लुते अति इति । **अप्लुतादिति** । अप्लुतात्=प्लुतभिन्नात् । अतः=अकारात् । परस्य=परवर्तिनः । रोः=रुः इत्येतस्य । उः=उकारः । स्यात् । अप्लुते=प्लुतभिन्ने । अति=अकारे परे ।

**शिवोऽर्च्यः**—शिवस् अर्च्यः इति स्थिते, सस्य पदान्तत्वेन 'ससजुषो रुः' इति रुत्वे, रोः अकारपरत्वेन अकारपरवर्तित्वेन च 'अतो रोरप्लुतादप्लुते' इति उत्वे, शिव उ अर्च्यः इति जाते, अकारादुकारे परे 'आद्गुणः' इति गुणेन पूर्वपरयोः स्थाने ओकारे, शिवो अर्च्यः इति जाते, 'एङः पदान्तादति' इति पूर्वरूपे, शिवोऽर्च्यः इति ।

**हशि चेति** । द्विपदमिदं सूत्रम् । अतः रोरुरित्यनुवर्तते । हशि परे अतः रोरुः स्यादिति । **तथेति** । अति इत्येतस्य हशि इति पाठः, शेषं पूर्वसूत्रवदिति ।

**शिवो वन्द्यः**—शिवस् वन्द्यः इति स्थिते, सस्य पदान्तत्वेन 'ससजुषो

---

**सर्पिष्कुण्डिका**—'सर्पिस् कुण्डिका' में इण् से परे होने के कारण 'कस्कादिषु च' से षकार हुआ । इसी तरह 'धनुष्कपालम्' में भी ।

**अतो रोरप्लुतादप्लुत इति** । प्लुतभिन्न अकार से परे रु का उ हो, प्लुतभिन्न अकार के परे रहने से ।

**शिवोऽर्च्यः**—'शिवस् अर्च्यः' ऐसी स्थिति में स् का पदान्त में रहने के कारण 'ससजुषो रुः' से रु हो गया एवं रु का अकार से परे तथा अकार पर वाले होने के कारण 'अतो रोरप्लुतादप्लुते' से उ हो गया, 'शिव उ अर्च्यः' होने पर अ से उ परे होने से 'आद्गुणः' से गुण होकर ओकार के आ जाने से 'शिवो अर्च्यः' हो गया, ओ से अ के परवर्ती होने से 'एङः पदान्तादति' से पूर्वरूप हो जाने से 'शिवोऽर्च्यः' रूप हो गया ।

**हशि चेति** । हश् प्रत्याहार के वर्ण परे होने पर भी अ से परे रु का उ हो ।

( ८६ ) **भोभगोअघोअपूर्वस्य योऽशि ८।३।१७ ॥ एतत्पूर्वस्य रोर्या-देशोऽशि परे । देवा इह, देवायिह । भोस् भगोस् अघोस् इति सान्ता निपाताः । तेषां रोर्यत्वे कृते ।**

---

रुरि'ति रुत्वे, रोः अकारपरत्वेन हशन्तःपातिवकारपरत्वेन च 'हशि चे'ति उत्वे, शिव उ वन्द्य इति जाते, गुणे आन्तरतम्येन ओकारे, शिवो वन्द्यः इति ।

**भो भगो इति ।** भो भगो अघो अपूर्वस्य यः अशि त्रिपदमिदं सूत्रम् । रोरित्यनुवर्तते । **एतदिति ।** एतत्पूर्वस्य=भोभगोअघोअपूर्वस्य । रोः= रेफस्य । यादेशः=य् इत्यादेशः । अशि=अश्वर्णे । परे=परतः ।

**देवा इह, देवायिह**—देवास् इह इति स्थिते, सस्य पदान्तत्वेन 'ससजुषो रुरि'ति रुत्वे, रोः अवर्णपूर्वत्वेन अश्वर्णपरत्वेन च 'भो भगो०' इति सूत्रेण यत्वे, देवाय् इह इति जाते, यस्य 'लोपः शाकल्यस्ये'ति लोपे, देवा इह इति जाते, 'आद्गुणः' इति दृष्टया 'पूर्वत्रासिद्धमि'ति यलोपासिद्धत्वेन गुणाभावे, देवा इह इति । यलोपाभावपक्षे—देवायिह इति ।

भोस् भगोस् अघोस् इत्येते सान्ताः=सः अन्ते यस्य तादृशाः । निपाताः । तेषां=भोस्-भगोस्-अघोस्-आदीनाम् । रोः=सस्य स्थाने यो रुस्तस्य । स्थाने । यत्वे='भो भगो०' इति सूत्रेण यकारादेशे । कृते=विहिते—

---

**शिवो वन्द्यः**—'शिवस् वन्द्यः' ऐसी स्थिति में स् का रु होने पर रु का हश् पर होने के कारण 'हशि च' से उ होने पर 'शिव उ वन्द्यः' हो गया एवं अ तथा उ का गुण होकर ओ होने पर 'शिवो वन्द्यः' हो गया ।

**भोभगोअघोअपूर्वस्य योऽशीति**—भो, भगो, अघो एवं अवर्ण पूर्व में होने वाले रु का य् आदेश हो, अश् वर्ण परे होने से ।

**देवा इह, देवायिह**—'देवास् इह' ऐसी स्थिति में स का रु होकर रु का अवर्ण पूर्व एवं अश् पर होने से 'भोभगोअघोअपूर्वस्य योऽशि' से यकारादेश होने पर 'देवाय् इह' हो गया एवं य् का 'लोपः शाकल्यस्य' से लोप होने से 'देवा इह' हुआ । 'पूर्वत्रासिद्धम्' से यलोप के असिद्ध होने से गुण न हुआ । यलोप के अभाव के पक्ष में—'देवायिह' हो गया ।

भोस्, भगोस्, अघोस् ये सकार अन्त में होने वाले निपात हैं । उनके सकार के स्थान में जो रु है उसके स्थान में य् होने के बाद—

( ८७ ) हलि सर्वेषाम् ८।३।२२ ।। **भो-भगो-अघो-अपूर्वस्य यस्य लोपः स्याद्धलि । भो देवाः । भगो नमस्ते । अघो याहि ।**

( ८८ ) रोऽसुपि ८।२।६९ ।। **अह्नो रेफादेशो न तु सुपि । अहरहः । अहर्गणः ।**

---

**हलि सर्वेषामिति ।** द्विपदमिदं सूत्रम् । भोभगोअघो-अपूर्वयोः व्योः लोप इत्यनुवर्तते । **भो इति ।** भोभगोअघो-अपूर्वस्य = एतत्पूर्वस्य । यस्य = यकारस्य ( वकारस्य च ) । लोपः । हलि = हल्वर्णे परे ।

**भो देवाः**—भोस् देवाः इति स्थिते, सस्य रुत्वे, रोः भोपूर्वत्वेन 'भोभगो०' इति यत्वे, भो य् देवा इति जाते, यस्य 'हलि सर्वेषामि'ति लोपे, भो देवाः इति ।

**भगो नमस्ते**—भगोस् नमस्ते इति स्थिते, सस्य रुत्वे, रोः भगोपूर्वत्वेन अश्परत्वेन च 'भोभगो०' इति यकारे, यस्य 'हलि सर्वेषामि'ति लोपे, भगो नमस्ते इति ।

**अघो याहि**—अघोस् याहि इति स्थिते, सस्य रुत्वे, रोरघोपूर्वत्वेन यत्वे, यस्य हल्परत्वेन लोपे, अघो याहि इति । अचि परे तु 'ओतो गार्ग्यस्ये'ति यलोपः, भो अत्र अघो इदम् ।

**रोऽसुपीति ।** रः असुपि द्विपदमिदं सूत्रम् । अह्न इत्यनुवर्तते । **अह्न इति ।** अह्नः = अहन्शब्दस्य । रेफादेशः = र इत्यादेशः । न तु सुपि = सुब्विभक्तौ परतः ।

**अहरहः**—अहन् अहन् इति स्थिते, 'रोऽसुपि' इति सूत्रेण 'अलोऽन्त्यस्ये'ति नियमेन नकारस्य रेफादेशे, रुत्वाभावेन उत्वाद्यभावे, योगे अहरहर् इति जाते, रेफस्यावसानत्वेन विसर्गे, अहरहः इति ।

---

**हलि सर्वेषामिति ।** भो, भगो, अघो एवं अवर्ण पूर्व में होने वाले य का लोप हो, हल् वर्ण परे रहने से । इससे यकार का लोप होकर—भो देवाः, भगो नमस्ते, अघो याहि रूप सिद्ध हुए ।

**रोऽसुपीति ।** अहन् शब्द का रेफ आदेश हो, यदि सुप् विभक्ति परे न हो तो ।

**अहरहः**—'अहन् अहन्' इस स्थिति में 'रोऽसुपि' से 'अलोऽन्त्यस्य' के आधार से दोनों नकार के स्थान में रेफादेश होकर 'अहर् अहर्' हो गया, रु

**( ८९ ) रो रि ८।३।१४ ।। रेफस्य रेफे परे लोपः ।**

**( ९० ) ढ्रलोपे पूर्वस्य दीर्घोऽणः ६।३।१११ ।। ढरेफयोर्लोपनिमित्तयोः पूर्वस्याऽणो दीर्घः । पुना रमते । मनस् रथ इत्यत्र रुत्वे कृते हशि चेत्युत्वे रो रीति लोपे च प्राप्ते—**

---

**अहर्गणः**—अहन् गणः इति स्थिते, नः 'रोऽसुपि' इति रेफादेशे, रोरभावेन उत्वाद्यभावे, अहर्गणः इति ।

**रो रीति** । रः रि द्विपदमिदम् । लोप इत्यनुवर्तते । **रेफस्येति** । रेफस्य = र् इत्येतस्य । रेफे = रकारे । परे=परतः स्थिते । लोपः=अदर्शनम् । स्यादिति ।

**ढ्रलोपे पूर्वस्य दीर्घोऽण इति** । ढ्रलोपे पूर्वस्य दीर्घः अणः चतुष्पदमिदं सूत्रम् । ढ्रलोपे = ढ् च रश्च ढ्रौ तयोर्लोपे । अण इति षष्ठ्यन्तम्, अण् च पूर्वेण णकारेण । **ढरेफयोरिति** । लोपनिमित्तयोः—लोपः = अदर्शनं, निमित्तं=हेतुर्ययोस्तयोः तथाभूतयोः । ढरेफयोः = ढकाररकारयोः परतः । पूर्वस्य = वर्णान्तराव्यवहितत्वेन तत्प्राग्वर्तिनः । अणः = अ इ उ इत्येतेषाम् । दीर्घः = द्विमात्रिकादेशः इति ।

**पुना रमते**—पुनर् रमते इति स्थिते, रः रेफे परे 'रो रि' इति लोपे, तन्निमित्तमादाय 'ढ्रलोपे पूर्वस्य दीर्घोऽणः' इति नकाराकारस्य दीर्घे आकारे, पुना रमते इति ।

मनोरथ इत्यत्र मनस् रथ इत्यत्र = इति स्थिते, रुत्वे = सस्य पदान्तत्वेन 'ससजुषो रुरि'ति रुत्वे । कृते = विहिते । उकारस्येत्संज्ञालोपयोः, मनर् रथ इति

---

न होने से उत्व, यत्व आदि के अभाव में योग से 'अहरहर्' हुआ, विसर्ग होने से 'अहरहः' हो गया ।

**अहर्गणः**—'अहन् गणः' ऐसी स्थिति में न् का रेफादेश 'रोऽसुपि' से होने पर 'अहर्गणः' हो गया । रु न होने से उत्व आदि नहीं होते ।

**रो रीति**—रेफ का रेफ परे रहने से लोप हो ।

**ढ्रलोपे पूर्वस्य दीर्घोऽण इति**—लोप के निमित्त बने ढकार एवं रेफ परे रहने से पूर्ववर्ती अण् का दीर्घ हो ।

**पुना रमते**—'पुनर् रमते' ऐसी स्थिति में 'रो रि' से रेफ का लोप होने पर उसके निमित्त से पूर्ववर्ती अण् पुन के अकार का दीर्घ हो जाने से 'पुना रमते' हुआ ।

**( ९१ ) विप्रतिषेधे परं कार्यम् १।४।२॥ तुल्यबलविरोधे परं कार्यं स्यात् । इति लोपे प्राप्ते । पूर्वत्राऽसिद्धमिति 'रो रि' इत्यस्याऽसिद्धत्वादुत्वमेव । मनोरथः ।**

---

जाते, 'हशि च' इति सूत्रेण रोरुत्वे, 'रो रि' इति लोपे=रलोपे च प्राप्ते=एकत्र युगपत्प्रवृत्तौ—

**विप्रतिषेधे परं कार्यम् इति** । त्रिपदमिदं सूत्रम् । विप्रतिषेधे=तुल्यबलयोर्विरोधे । **तुल्येति** । तुल्यबलयोर्विरोधे–तुल्यं=समानं बलं=प्रवृत्तिकाधारो ययोस्तौ तादृशौ अन्यत्रान्यत्र स्वांशे स्वांशे लब्धावकाशौ, तयोर्विरोधः=एकत्र युगपत्प्राप्तिः तत्र तादृशस्थले । परं=यत्परं शास्त्रं तत् । कार्यं=कार्ये प्रवृत्तं स्यादिति । इति सूत्राशयेन 'हशि च' इत्येतस्य शिवो वन्द्य इत्यादौ 'रो रि' इत्यस्य पुना रमते इत्यत्र च लब्धावकाशत्वात्तौ हि तुल्यबलौ तयोः 'रो रि' इत्यस्यैव परशास्त्रत्वेन तस्य प्रवृत्त्या । लोपे=रलोपे । प्राप्ते । 'पूर्वत्रासिद्धम्' इति सपादसप्ताध्यायीविधौ कर्तव्ये त्रिपादी असिद्धा इति नियमात् उत्वे कर्तव्ये रलोपस्यासिद्धत्वात् । उत्वमेव='हशि च' इत्युत्वमेव ।

**मनोरथः**—मनस् रथः इति स्थिते, सस्य 'ससजुषो रुरि'ति रुत्वे, अनुबन्धलोपे, मनर् रथ इति जाते, हश्परत्वेन 'हशि चे'ति रोरुत्वे, रपरत्वेन 'रो री'ति रेफस्य लोपे च युगपत्प्राप्ते 'विप्रतिषेधे परं कार्यमि'ति परशास्त्रत्वेन रलोप एव प्राप्ते 'पूर्वत्रासिद्धमि'ति सपादसप्ताध्यायीविधौ कर्तव्ये त्रिपाद्यसिद्धेति 'हशि चे'त्येतस्य सप्ताध्यायीगतत्वेन 'रो री'त्यस्य च त्रिपादीगतत्वेन 'हशि चे'त्यस्यापेक्षया 'रो री'त्यस्य असिद्धे 'हशि चे'त्युत्वे, मन उ रथ इति जाते, 'आद्गुणः' इति गुणे—मनोरथः इति ।

---

'मनस् रथः' ऐसी स्थिति में सकार का रुत्व होने पर 'मनर् रथः' हो जाने पर 'हशि च' से रु का उत्व एवं 'रो रि' से र का लोप एक साथ प्राप्त होने पर—

**विप्रतिषेधे परं कार्यमिति** । तुल्य बल वालों का विरोध हो जाने पर परशास्त्र कार्य में प्रवृत्त होता है ।

इससे 'हशि च' की अपेक्षा 'रो रि' के परशास्त्र होने से र् का लोप प्राप्त होने पर 'पूर्वत्रासिद्धम्' से 'रो रि' इसके असिद्ध होने से ( 'पूर्वत्रासिद्धम्' का यह नियम है कि सपादसप्ताध्यायी की विधि के लिए त्रिपादी विधि असिद्ध होती है । यहाँ 'हशि च' सप्ताध्यायी है और 'रो रि' त्रिपादी । अतः 'हशि च'

( ९२ ) एतत्तदोः सुलोपोऽकोरनञ्समासे हलि ६।१।१३२ ॥ **अककारयोरेतत्तदोर्यः सुस्तस्य लोपो हलि न तु नञ्समासे । एष विष्णुः । स शम्भुः । अकोः किम् ? एषको रुद्रः । अनञ्समासे किम् ? असः शिवः । हलि किम् ? एषोऽत्र ।**

**इति विसर्गसन्धिः ।**

**इति सन्धयः ।**

---

**एतत्तदोरिति ।** एतत्तदोः सुलोपः अकोः अनञ्समासे हलि पञ्चपदमिदं सूत्रम् । अकोः एतत्तदोः सुलोपः हलि अनञ्समासे इति । **अककारयोरिति ।** न विद्यते ककारो यत्र तथाभूतयोः एतत्तदोः=एतद्-तद्शब्दयोः । यः सुः=प्रथमैकवचनप्रत्ययः । तस्य=सोः । लोपः=अदर्शनम् । हलि=हल्वर्णे परे । न । तु =हि । नञ्समासे=नञ्समासस्थले ।

**एष विष्णुः**—एषस् विष्णुः इति स्थिते, हल्परत्वेन ककाररहितत्वेन नञ्समासस्थलभिन्नत्वेन च एषस् इत्यस्य सः 'एतत्तदोरि'ति लोपे, एष विष्णुः इति ।

**स शम्भुः**—सस् शम्भुः इति स्थिते, सस्य 'एतत्तदोरि'ति लोपे, स शम्भुः । अकोः किम् ? सूत्रे अकोः=ककाररहितयोरिति विशेषणं किं=किमर्थम् ? **एषको रुद्रः**—अत्र ककारयुक्तत्वेन सोर्लोपाभावेन सस्य रुत्वे 'हशि चे'त्युत्वे,

---

के लिए 'रो रि' असिद्ध है । ) र् का उत्व होकर 'मन उ रथः' हो गया और गुण होने पर मनोरथः' हो गया ।

**एतत्तदोरिति** । ककार से रहित एतद् एवं तद् शब्द का जो सु है उसका लोप हो, हल्वर्ण के परे रहने पर नञ्समास-स्थल को छोड़कर ।

**एष विष्णुः**—'एषस् विष्णुः' ऐसी स्थिति में स् का 'एतत्तदोः' से लोप होने पर 'एष विष्णुः' हो गया ।

**स शम्भुः**—'सस् शम्भुः' ऐसी स्थिति में 'एतत्तदोः' से स् का लोप होने पर 'स शम्भुः' हो गया ।

सूत्र में ककार से रहित क्यों कहा गया ? **एषको रुद्रः** ऐसे में सलोप न हो इसलिए । 'एषकस् रुद्रः' ऐसी स्थिति में ककार से युक्त होने के कारण सलोप के अभाव में स् का रुत्व, उत्व तथा गुण होने पर 'एषको रुद्रः' हो गया ।

गुणे—एषको रुद्रः इति । तेन एषकोः इत्यादौ सोर्लोपो मा भूदिति । अनञ्समासे =नञ्समासभिन्नस्थले इति किम् =किमर्थम् ? **असः शिवः**—न सः असः इत्यत्र नञ्समासत्वात्सोर्लोपाभावेन सस्य रुत्वे विसर्गे च, असः शिव इति । तेन असः इत्यादौ सोर्लोपो मा भूदिति । हलि किम् ?—हलि =सूत्रे हलि इति किम् =किमर्थम् ? **एषोऽत्र**—एषस् अत्र इति स्थिते, सस्य हल्परत्वाभावेन लोपाभावे रुत्वे, रोः 'अतो रोरि'त्युत्वे, गुणे, पूर्वरूपे—एषोऽत्र इति । तेन अचि सोर्लोपो मा भूदिति ।

इत्थं विसर्गसन्धिर्वै सप्रपञ्चं निरूपितः ।
स्वादिसन्धेः समावेशाद् व्याख्याताः पञ्चसन्धयः ॥ १ ॥
सिद्धान्तकौमुदी येन सङ्क्षिप्य विहिता विदा ।
ता मध्यलघुसाराख्यकौमुद्यस्तं सदा नुमः ॥ २ ॥

**इति विसर्गसन्धिः ।**

**इति सन्धयः**

---

नञ्समास के स्थल में नहीं, ऐसा क्यों कहा गया ? **असः शिवः**—न सः =असः इत्यादि में सुलोप न हो इसलिए । 'असस् शिवः' ऐसी स्थिति में नञ्समास होने के कारण सुलोप के अभाव में स् का रुत्व एवं विसर्ग होकर 'असः शिवः' हो गया । सूत्र में हल् परे रहने से, ऐसा क्यों कहा गया ? अच् परे रहने पर लोप न हो इसलिए । इस कारण **एषोऽत्र**—'एषस् अत्र' ऐसी स्थिति में परवर्ती हल् के अभाव में स् का लोप न होने से रुत्व, उत्व, गुण एवं पूर्वरूप होकर 'एषोऽत्र' हो गया ।

नमो वरदराजाय येन निर्मथ्य कौमुदीम् ।
विहिता बालबोधाय सारसिद्धान्तकौमुदी ॥

**विसर्गसन्धि समाप्त ।**

**सन्धि-प्रकरण समाप्त ।**

## अथ षड्लिङ्गेषु अजन्तपुँल्लिङ्गाः

( ९३ ) अर्थवदधातुरप्रत्ययः प्रातिपदिकम् १।२।४५ ॥ **धातुं प्रत्ययं प्रत्ययान्तञ्च वर्जयित्वाऽर्थवच्छब्दस्वरूपं प्रातिपदिकसंज्ञं स्यात् ।**

( ९४ ) कृत्तद्धितसमासाश्च १।२।४६ ॥ **कृत्तद्धितान्तौ समासाश्च तथा स्युः ।**

---

अथ षड्लिङ्गप्रकरणमनुशास्ति । तत्र पुंस्त्रीनपुंसकभेदात् लिङ्गस्य त्रैविध्यम् । अजन्तहलन्तेति शब्दद्वैविध्येन त्रिविधस्य द्विविधत्वमिति षड्लिङ्गेष्वित्युक्तम् । तत्र अजन्तपुँल्लिङ्गाः, अजन्तस्त्रीलिङ्गाः, अजन्तनपुंसकलिङ्गाः, हलन्तपुँल्लिङ्गाः, हलन्तस्त्रीलिङ्गाः हलन्तनपुंसकलिङ्गाश्चेति शब्दाः परिगण्यन्ते। तत्रादौ अजन्तपुँल्लिङ्गाः शब्दा निरूप्यन्ते । आदौ सर्वमूलत्वात्प्रातिपदिकसंज्ञां निर्वक्ति—**अर्थवदिति** । अर्थवत् अधातुः अप्रत्ययः प्रातिपदिकम् चतुष्पदमिदं सूत्रम् । अर्थवत् प्रातिपदिकं शब्दस्वरूपमित्यध्याहार्यं विशेष्यम् । तेन अर्थवच्छब्दस्वरूपं प्रातिपदिकम् । अर्थः=जातिद्रव्यगुणक्रियारूपोऽभिधेयोऽस्यास्तीति अर्थवत् । अधातुः=न धातुरधातुः आरोपितो धातुरधातुर्वा । अप्रत्ययः=न प्रत्ययः अप्रत्ययः । **धातुमिति** । धातुं=क्रियावाचिशब्दम् । प्रत्ययम्=अङ्गं निमित्तं कृत्वा यः प्रवर्तते तम् । प्रत्ययान्तं=प्रत्ययः अणादिरन्ते यस्य तम् । च=अपि । वर्जयित्वा=विहाय । अर्थवत्=जातिद्रव्यगुणक्रियान्यतमाभिधेयविशिष्टम् । शब्दस्वरूपं=शब्दः अव्युत्पन्नो डित्थादिः । प्रातिपदिकसंज्ञं=प्रातिपदिकं संज्ञा यस्य तत् तादृशम् । स्यात् ।

**कृत्तद्धितसमासाश्चेति** । कृत्तद्धितसमासाः च द्विपदमिदं सूत्रम् । प्रातिपदिकमित्यनुवर्तते । **कृदिति** । कृत्तद्धितान्तौ=कृत्प्रत्ययान्तस्तद्धितप्रत्ययान्तश्च तौ । समासाः=समस्तशब्दाः । च=अपि चकारान्निरर्थकनिपाताश्चेत्यपि । तथा=प्रातिपदिकसंज्ञकाः । स्युरिति ।

---

**अर्थवदधातुरिति** । धातु, प्रत्यय एवं प्रत्ययान्त को छोडकर जो अर्थ ( जाति, द्रव्य, गुण, क्रिया में से एक ) युक्त शब्दस्वरूप है, वह प्रातिपदिकसंज्ञक होता है । इसमें डित्थ आदि अव्युत्पन्न शब्द आते हैं ।

**कृत्तद्धितसमासाश्चेति** । कृत्प्रत्ययान्त एवं तद्धितप्रत्ययान्त शब्द तथा समास ( समस्त शब्द ) भी वैसे अर्थात् प्रातिपदिकसंज्ञक होते हैं ।

(९५) स्वौजसमौट्छष्टाभ्याम्भिस्ङेभ्याम्भ्यस्ङसिभ्याम्भ्यस्ङसोसाम्ङ्योस्सुप् ४।१।२ ।। सु औ जस् इति प्रथमा। अम् औट् शस् इति द्वितीया। टा भ्याम् भिस् इति तृतीया। ङे भ्याम् भ्यस् इति चतुर्थी। ङसि भ्याम् भ्यस् इति पञ्चमी। ङस् ओस् आम् इति षष्ठी। ङि ओस् सुप् इति सप्तमी।

( ९६ ) ङ्याप्प्रातिपदिकात् ४।१।१ ।। ङ्यन्तादाबन्तात्प्रातिपदिकाच्च परे स्वादयः प्रत्ययाः स्युः।

( ९७ ) सुपः १।४।१०३ ।। सुपस्त्रीणि त्रीणि वचनान्येकश एकवचनद्विवचन-बहुवचनसंज्ञानि स्युः।

---

स्वौजसमौडिति। सु औ जस् इत्यादीनां सुप्पर्यन्तानां समाहारद्वन्द्वः इतरेतरद्वन्द्वो वा सौत्रमेकवचनम्। एते सप्तविभक्तीनामेकविंशतिर्वचनानि। तत्र प्रथमाविभक्तेरेकवचने सु इति, द्विवचने औ इति, बहुवचने जस् इति। एवमेव द्वितीयाः क्रमेण अम् औट् शस् इत्येते एवं तृतीयादीनामपि। तत्र सुङस्योरुकारेकारौ जशटङपाश्च इतः। एतेषामेव समष्टौ सुप् इति व्यवहारः। सुट् इति स्वौजसमौट् इत्येतेषां ग्रहणम्। औङ् इति औ औट् इत्येतौ। आङ् इति टा। ङित् इति ङे ङसि ङस् ङि इत्येतेषाम्। एते स्वादयः प्रत्ययाः ङ्यन्तादाबन्तात्प्रातिपदिकाच्च भवन्ति। एते एव विभक्तिसंज्ञका अपि।

ङ्याप्प्रातिपदिकात् इति। ङी च आप् च प्रातिपदिकश्च तेषां समाहारस्तस्मात्। सौत्रमेकवचनम्। ङ्याब्भ्यां 'येन विधिस्तदन्तस्ये'ति ङ्यन्ताबन्तानां ग्रहणम्। ङीति ङीप्ङीष्ङीनां आबिति टाप्चाब्डापाम्। अधिकारोऽयम्। ङ्यन्तादिति। ङ्यन्ता=ङी अन्ते यस्य तस्मात्। आबन्तात्=आबन्ते यस्य तस्मात्। प्रातिपदिकात्=प्रातिपदिकसंज्ञकात्। च। परे=परवर्तित्वेन। स्वादयः=सु आदिर्येषान्ते तादृशाः सुप्पर्यन्ताः विभक्तयः। प्रत्ययाः=तद्धितप्रत्ययाश्चाणादयः। स्युः।

सुप इति। सुप इति षष्ठ्यन्तं पदम्। सुप इति। सुपः=स्वादीनाम्। त्रीणि

---

स्वौजसमौट् इत्यादि। ये प्रथमा आदि सात विभक्तियों के प्रत्येक के एकवचन, द्विवचन, बहुवचन करके तीन-तीन वचनों से २१ वचन हैं।

ङ्याप्प्रातिपदिकादिति। ङी अन्त में होने वाले, आप् अन्त में होने वाले एवं प्रातिपदिकसंज्ञा होने वाले शब्द से परे ये सु आदि प्रत्यय होते हैं।

( ९८ ) द्व्येकयोर्द्विवचनैकवचने १।४।२२ ॥ द्वित्वैकत्वयोरेते स्तः ।

( ९९ ) विरामोऽवसानम् १।४।११० ॥ वर्णानामभावोऽवसानसंज्ञः स्यात् । रुत्वविसर्गौ । रामः ।

---

त्रीणि=प्रत्येकमिति । वचनानि । एकशः=एकैकम् । एकवचनद्विवचनबहुवचन-संज्ञानि=एकवचनद्विवचनबहुवचनसंज्ञा येषान्तानि । स्युरिति । तत्र सु अम् टा ङे ङसि ङस् ङि इत्येकवचनम्, औ औट् भ्यां भ्यां भ्याम् ओस् ओस् इति द्विवचनम्, जस् शस् भिस् भ्यस् भ्यस् आम् सुप् इति बहुवचनम् ।

**द्व्येकयोरिति** । द्व्येकयोः द्विवचनैकवचने द्विपदमिदं सूत्रम् । द्व्येकयोः — द्वौ च एकश्च तयोर्द्व्येकयोः = द्वित्वैकत्वयोः । **द्वित्वैकत्वयोरिति** । द्वित्वैकत्वयोः= द्विसङ्ख्याकैकसङ्ख्याकयोः । एते = द्विवचनैकवचने । स्त इति ।

**विरामोऽवसानमिति** । विरामः अवसानम्, द्विपदमिदं सूत्रम् । **वर्णानामिति** । वर्णानां = उत्तरवर्णानाम् । अभावः = वर्णोच्चारणानन्तरमव्यवहितोत्तरकालेऽनु-पस्थितिः । अवसानसंज्ञः = अवसानसंज्ञा यस्य तादृशः । स्यात् । रुत्वविसर्गौ= सस्य 'ससजुषो रुरि'ति रुत्वं रेफस्य 'खरवसानयोरि'ति विसर्ग इति ।

**रामः**—राम इति साधनीयम् । तत्र शब्दो द्विधा—व्युत्पन्नोऽव्युत्पन्नश्च । व्युत्पन्नः प्रकृतिप्रत्ययसम्बद्धार्थबोधको यौगिकः, अव्युत्पन्नस्तु रूढः । प्रकृते 'रमन्ते योगिनोऽस्मिन्निति व्युत्पत्त्या रम्धातोरधिकरणेऽर्थे घञि, उपधावृद्धया निष्पन्नः परब्रह्मार्थको रामशब्दो व्युत्पन्नः, दशरथपुत्र-रेणुकासुत-रोहिणीनन्दनाद्यर्थकस्तु

---

**सुप इति** । सुप् ( सु से लेकर सुप् तक ) के तीन-तीन वचन एक-एक करके एकवचन, द्विवचन एवं बहुवचन संज्ञा वाले हों ।

**द्व्येकयोर्द्विवचनैकवचन इति** । द्वित्व एवं एकत्व को ये अर्थात् एकवचन एवं द्विवचन हों ।

**विरामोऽवसानमिति** । वर्णों का अभाव ( न होना ) अवसान संज्ञा वाला होता है । अर्थात् जिसके उच्चारण के बाद अव्यवहित उत्तर काल में दूसरे वर्ण का उच्चारण नहीं होता वहाँ पहले उच्चारित वर्ण अवसानसंज्ञक होता है । स् का रुत्व एवं विसर्ग होते हैं ।

**रामः**—'रामः' ऐसे रूप की सिद्धि करनी है । शब्द दो प्रकार के होते हैं—व्युत्पन्न एवं अव्युत्पन्न । व्युत्पन्न वह शब्द है जो प्रकृति एवं प्रत्यय से सम्बन्धित अर्थ का बोधक होता है, वह यौगिक भी कहलाता है । अव्युत्पन्न

रूढो रामशब्दः । रूढपक्षे रामशब्दस्य 'अर्थवदधातुरप्रत्ययः प्रातिपदिकमि'ति प्रातिपदिकसंज्ञा, यौगिकपक्षे तु तस्य कृत्प्रत्ययान्तत्वात् 'कृत्तद्धितसमासाश्च' इति प्रातिपदिकसंज्ञा । उभयत्रापि पक्षे प्रातिपदिकसंज्ञायां कृतायां, प्रातिपदिक-रामशब्दात् 'ङ्याप्प्रातिपदिकात्' इत्यधिकारेण 'स्वौजसमौट्०' इत्यादिना 'खले कपोता युगपत्पतन्ति' इत्यादिसिद्धेन 'खलेकपोतन्यायेन' सर्वेष्वेव स्वादिषु प्राप्तेषु 'प्रातिपदिकार्थमात्रे प्रथमा' इति प्रथमाविभक्तेर्विवक्षया द्वितीयादि-विभक्तिषु निवृत्तासु अवशिष्टानां सु औ जस् इत्येतेषां सुप इति क्रमेण एकद्विबहु-वचनसंज्ञासु विहितासु एकत्वविवक्षातः 'द्व्येकयोर्द्विवचनैकवचने' इति एकवचने निर्दिष्टे प्रथमैकवचने सुविभक्तौ, राम सु इति जाते, उकारस्य 'उपदेशेऽजनु-नासिक इत्' इतीत्संज्ञायां 'तस्य लोपः' इति लोपे, रामस् इति जाते, तस्य स्वन्तत्वेन 'सुप्तिङन्तं पदमि'ति पदसंज्ञायां, तदन्तत्वेन पदान्तत्वात् सः 'ससजुषो रुरि'ति रुत्वे, उकारस्येत्संज्ञालोपयोः, रामर् इति जाते, तदनन्तरं वर्णान्तरो-च्चारणाभावेन तस्य 'विरामोऽवसानमि'ति अवसानसंज्ञायां 'खरवसानयो-र्विसर्जनीयः' इति विसर्गे, रामः इति सिध्यति ।

---

वह माना जाता है जिसकी व्युत्पत्ति चाहे कुछ भी हो उसका प्रयोग रूढ अर्थ में होता है । 'रमन्ते योगिनोऽस्मिन्' इस व्युत्पत्ति से अधिकरण में रम् धातु से घञ् प्रत्यय होने पर बना राम शब्द व्युत्पन्न है और उसका अर्थ है—परब्रह्म, जिसमें योगियों का चित्त लगा रहता है । दाशरथि राम, परशुराम, बलराम आदि अर्थ वाला राम शब्द रूढ है । यौगिक पक्ष में राम शब्द को कृत्प्रत्ययान्त होने के कारण 'कृत्तद्धितसमासाश्च' से, (रूढ पक्ष में 'अर्थवदधातुरप्रत्ययः प्राति-पदिकम्' से प्रातिपदिक संज्ञा होती है । प्रातिपदिक संज्ञा होने के बाद प्राति-पदिक राम को ङ्याप्प्रातिपदिकात्' के अधिकार से 'स्वौजसमौट' इत्यादि सूत्र से 'खलेकपोतन्याय' से सभी सातों विभक्ति के इक्कीस वचन प्राप्त हुए । तब प्रथमा विभक्ति की विवक्षा होने से सु औ जस् ये तीन वचन रहकर शेष छँट गये । इन तीनों को भी 'सुपः' से एकवचन, द्विवचन एवं बहुवचन संज्ञा होने पर एकत्व की विवक्षा होने से 'द्व्येकयोर्द्विवचनैकवचने' से एकवचन सु प्राप्त होकर 'राम सु' हो गया । सु के उकार की इत्संज्ञा होने से उसका लोप होने पर 'रामस्' हो गया, तब रामस् के सुबन्त होने के कारण 'सुप्तिङन्तं पदम्' से पद संज्ञा होने से स् के पदान्त में होने से 'ससजुषो रुः' से रु हो गया और उ की इत्संज्ञा तथा लोप से 'रामर्' हो गया एवं उसके बाद वर्ण का अभाव होने से

( १०० ) सरूपाणामेकशेष एकविभक्तौ १।२।६४ ॥ **एकविभक्तौ यानि सरूपाण्येव दृष्टानि तेषामेक एव शिष्यते ।**

( १०१ ) प्रथमयोः पूर्वसवर्णः ६।१।१०२ ॥ **अकः प्रथमाद्वितीययोरचि पूर्वसवर्णदीर्घ एकादेशः स्यात् । इति प्राप्ते ।**

( १०२ ) नादिचि ६।१।१०४ ॥ **आदिचि न पूर्वसवर्णदीर्घः । वृद्धिरेचि । रामौ ।**

---

**सरूपाणामिति ।** सरूपाणाम् एकशेषः एकविभक्तौ त्रिपदमिदं सूत्रम् । सरूपाणां—समानं = तुल्यं, रूपम्=आकृतिर्येषान्ते तेषाम् । एकशेषः = एकश्चासौ शेषश्च । एकविभक्तौ=एका एव विभक्तिस्तत्र । **एकविभक्ताविति** । एका समाना एव विभक्तिस्तस्यां परतः स्थितायाम् । यानि = यावन्ति । सरूपाणि = समान रूपाणि । एव । दृष्टानि = श्रुतानि इति । तेषां = तादृशानां समानरूपाणां शब्दानां मध्ये । एकः एव शिष्यते = अवशिष्टो भवति अन्ये न श्रूयन्ते इति । सरूपग्रहणेन अर्थभेदे भवत्येकशेषः ।

**प्रथमयोः पूर्वसवर्ण इति ।** द्विपदमिदम् । अक इति दीर्घ इति अचि इति चानुवर्तते । प्रथमयोः = आद्यविभक्तिद्वय्योः प्रथमाद्वितीययोरिति । **अक इति ।** अकः = अग्वर्णात् । प्रथमाद्वितीययोः = प्रथमा च द्वितीया च तयोर्विभक्त्योः । अचि = अज्वर्णे परतः । पूर्वसवर्णदीर्घः—पूर्वेण = पूर्ववर्तिना अका समानो वर्णो भवति यत्र तादृशो यो दीर्घः तादृशः । एकादेशः स्यात् । इति = इत्यनेन । पूर्वसवर्णदीर्घे प्राप्ते ।

**नादिचि इति ।** न आद् इचि त्रिपदमिदं सूत्रम् । आद् इचि न पूर्वसवर्ण-दीर्घः । आद् = अवर्णात् । इचि = इज्वर्णे परे । न पूर्वसवर्णदीर्घः । वृद्धिरेचि = पूर्वसवर्णदीर्घस्य निषेधेन 'वृद्धिरेची'ति वृद्धिः ।

---

उसे 'विरामोऽवसानम्' से अवसानसंज्ञा होकर 'खरवसानयोर्विसर्जनीयः' से विसर्ग होकर 'रामः' हो गया ।

**सरूपाणामिति ।** एक ही विभक्ति के रहने पर जो समान रूप वाले देखे गये हैं उनमें से एक ही शेष रहता है ।

**प्रथमयोरिति ।** अक् वर्णों से प्रथमा एवं द्वितीया विभक्ति के अच् परे रहने से पूर्वसवर्णदीर्घ एकादेश हो । इससे प्राप्त होने पर—

**नादिचीति ।** अ-वर्ण से इज्वर्ण परे रहने पर पूर्वसवर्णदीर्घ न हो । 'वृद्धि-रेचि' से वृद्धि ।

**( १०३ ) बहुषु बहुवचनम् १।४।२१॥ बहुत्वविवक्षायां बहुवचनं स्यात् ।**

**( १०४ ) चुटू १।३।७ ॥ प्रत्ययाद्यौ चुटू इतौ स्तः ।**

**( १०५ ) विभक्तिश्च १।४।१०४ ॥ सुप्तिङौ विभक्तिसंज्ञौ स्तः ।**

---

**रामौ**—रामशब्दात् प्रातिपदिकसंज्ञायां, द्विवचनविवक्षायां प्रथमाया द्विवचने औ विभक्तौ, राम राम औ इति जाते, द्वयोरेव सरूपतया एकविभक्तिपरत्वाच्च 'सरूपाणामेकशेष एकविभक्तौ' इति एकरामस्य शेषे राम औ इति जाते, 'आद्गुणः' इति प्राप्तं गुणं एच्परत्वेन वाधित्वा 'वृद्धिरेचि' इति वृद्धौ प्राप्तायां 'प्रथमयोः पूर्वसवर्णः' इति पूर्वपरयोः पूर्वसवर्णदीर्घे प्राप्ते 'नादिचि' इति तन्निषेधे वृद्धौ आन्तरतम्यात्पूर्वपरयोः स्थाने औकारे, रामौ इति ।

**बहुषु बहुवचनमिति** । द्विपदमिदं सूत्रम् । बहुषु इति भाववचनं, तेन बहुत्वविवक्षायाम् । **बहुत्वेति** । बहुत्वविवक्षायां=द्वयधिकसङ्ख्यायां वक्तुमभीष्टायाम् । बहुवचनम् । स्यात् ।

**चुटू इति** । प्रत्ययस्य आदिः इत् इति चानुवर्तते । **प्रत्ययाद्यौ इति** । प्रत्ययाद्यौ—आदौ भवः आद्यः, प्रत्ययस्य आद्यौ प्रत्ययाद्यौ=प्रत्ययादिगतौ । चुटू—चुः=चवर्गः, टुः=टवर्गः च तौ । इतौ=इत्संज्ञकौ । स्तः ।

**विभक्तिश्चेति** । तिङः सुपः इति चानुवर्तते । **सुप्तिङाविति** । सुप्तिङौ—सुप्=स्वादयः सुबन्ताः, तिङ्=तिवादयो महिङन्ताः च तौ । विभक्तिसंज्ञौ=विभक्तिः संज्ञा ययोस्तौ तादृशौ । स्तः ।

---

**रामौ**—राम शब्द से प्रातिपदिक संज्ञा के वाद द्विवचन की बिवक्षा में प्रथमा विभक्ति में औ प्रत्यय आने पर 'राम राम औ' ऐसी स्थिति में दोनों का एक ही रूप होने से 'सरूपाणामेकशेष एकविभक्तौ' से एक राम का शेष होने पर 'राम औ' हो गया और 'आद्गुणः' से प्राप्त गुण को वाधकर एच् परे रहने से 'वृद्धिरेचि' से वृद्धि के प्राप्त होने पर उसे भी वाधकर 'प्रथमयोः पूर्वसवर्णः' से प्राप्त पूर्वसवर्ण का 'नादिचि' से निषेध होने के कारण वृद्धि होने पर रामौ रूप सिद्ध हो गया ।

**बहुषु बहुवचनमिति** । बहुत्व ( दो से अधिक संख्या ) की विवक्षा में बहुवचन हो ।

**चुटू इति** । प्रत्यय के आदि में रहे चवर्ग एवं टवर्ग इत्संज्ञक हों ।

**विभक्तिश्चेति** । सुप् एवं तिङ् विभक्तिसंज्ञक होते हैं ।

**( १०६ ) न विभक्तौ तुस्माः १।३।४ ॥ विभक्तिस्थास्तवर्गसमा नेतः । इति सस्य नेत्त्वम् । रामाः ।**

---

**न विभक्तौ तुस्मा इति ।** इत इत्यनुवर्तते । त्रिपदमिद सूत्रम् ।

**विभक्तिस्था इति ।** विभक्तिस्थाः = सुप्तिङ्गताः । तवर्गसमाः=तथदधनसकारमकाराः; यथा ङसेरात् ङस्य रन्, जस अम् । न । इतः = इत्संज्ञकाः हलन्त्यमितीति । इति = सूत्रेणानेन । सस्य = जसः सकारस्य । न । इत्वम् = इत्संज्ञाभाव इति, अतो नैव लोप इति ।

**रामाः**—रामशब्दात् प्रातिपदिकसंज्ञायां, बहुत्वविवक्षायां 'बहुषु बहुवचनमि'ति बहुवचने, प्रथमाविभक्तिबहुवचने जसि, जसः जकारस्य प्रत्ययाद्यत्वेन 'चुटू' इतीत्संज्ञायां लोपे, राम अस् इति जाते, सः 'हलन्त्यमि'ति इत्संज्ञायां प्राप्तायां, जसः 'विभक्तिश्चे'ति सुप्त्वेन विभक्तिसंज्ञया 'न विभक्तौ तुस्माः' इति इन्निषेधे, राम अस् इति स्थिते, अकोऽकि परे प्राप्तं सवर्णदीर्घं बाधित्वा 'अतो गुणे' ( ६।१।९७ ॥ अपदान्तादकाराद् गुणे परतः पररूपमेकादेश इति ) इति पररूपे प्राप्ते, परत्वात् तं बाधित्वा 'प्रथमयोः पूर्वसवर्ण.' इति पूर्वसवर्णदीर्घे, रामास् इति जाते, तस्य सुबन्तत्वेन पदसंज्ञायां, सस्य 'ससजुषो रुरि'ति रुत्वे 'विरामोऽवसानमि'त्यवसानसंज्ञायां, रेफस्य 'खरवसानयोर्विसर्जनीयः' इति विसर्गे, रामाः इति ।

---

**न विभक्तौ तुस्मा इति ।** विभक्ति में रहे तवर्ग, सकार एवं मकार इत्संज्ञक न हों । इससे सकार की इत्संज्ञा नहीं हुई ।

**रामाः**—राम शब्द से बहुत्व की विवक्षा में 'बहुषु बहुवचनम्' से बहुवचन होने पर प्रथमा के बहुवचन जस् के आ जाने से 'राम जस्' हो गया । तब जकार का 'चुटू' से इत्संज्ञा होकर 'तस्य लोपः' से लोप हो गया एवं स् की 'हलन्त्यम्' से इत्संज्ञा होने पर जस् को सुप् होने के कारण 'विभक्तिश्च' से विभक्तिसंज्ञा होने से 'न विभक्तौ तुस्माः' से उसका निषेध हो गया । तब 'राम अस्' ऐसी स्थिति में अक् से अक् के परे रहने से 'अकः सवर्णे दीर्घः' से प्राप्त सवर्णदीर्घ के अपवाद के रूप में 'अतो गुणे' से प्राप्त पररूप का बाधकर पर शास्त्र होने से 'प्रथमयोः पूर्वसवर्णः' से पूर्वसवर्णदीर्घ होकर 'रामास्' हो गया एवं स् का रुत्व होकर रेफ का अवसान होने से 'खरवसानयोर्विसर्जनीयः' से विसर्ग होकर 'रामाः' हो गया ।

(१०७) एकवचनं सम्बुद्धिः २।३।४९ ॥ **सम्बोधने प्रथमाया एकवचनं सम्बुद्धिसंज्ञं स्यात् ।**

(१०८) यस्मात्प्रत्ययविधिस्तदादि प्रत्ययेऽङ्गम् १।४।१३ ॥ **यः प्रत्ययो यस्मात्क्रियते तदादिशब्दस्वरूपं तस्मिन्नङ्गं स्यात् ।**

(१०९) एङ्ह्रस्वात्सम्बुद्धेः ६।१।६९ ॥ **एङन्ताद्ध्रस्वान्ताच्चाङ्गाद्धल्लुप्यते सम्बुद्धेश्चेत् । हे राम । हे रामौ । हे रामाः ।**

---

अत्र प्रकरणे 'सम्बोधने च' (२।३।४७) प्रथमा स्यात् इति सम्बोधनेऽर्थे प्रथमा भवतीति अवधेयम् ।

**एकवचनं सम्बुद्धिरिति ।** द्विपदमिदं सूत्रम् । सम्बोधने इति अनुवर्तते । **सम्बोधने इति ।** सम्बोधनम्=अभिमुखीकरणं तस्मिन्नधिकेऽर्थे । **प्रथमायाः**=प्रथमाविभक्तेः । एकवचनं=सुः । सम्बुद्धिसंज्ञं=सम्बुद्धिः संज्ञा यस्य तत्तादृशम् । स्यात् । सुः सम्बुद्धिरित्याशयः ।

**यस्मात्प्रत्ययविधिस्तदादि प्रत्ययेऽङ्गमिति ।** यस्मात् प्रत्ययविधिः तदादि प्रत्यये अङ्गम् पञ्चपदमिदं सूत्रम् । **य इति ।** यः । प्रत्ययः=यतः प्रत्ययो विधीयते सा प्रकृतिः प्रकृतौ योऽनुयुज्यते सः प्रत्ययः; यथा राम इत्यत्र रम् इति प्रकृतिः, घञ् इति प्रत्ययः । यस्मात्=प्रकृतेः । क्रियते=विधीयते । तदादिशब्दस्वरूपं=स आदिर्यस्य तत् तादृशं यच्छब्दस्वरूपं तत्; यथा भवामि इत्यत्र भव इति न तु भूमात्रम् । तस्मिन्=तस्मिन् प्रत्यये परे । अङ्गं=अङ्गसंज्ञम् । स्यात् इति । प्रत्यये इति ग्रहणेन प्रत्ययलोपे न भवति अङ्गसंज्ञा ।

**एङ्ह्रस्वात्सम्बुद्धेरिति ।** एङ्ह्रस्वात् सम्बुद्धेः द्विपदमिदं सूत्रम् । अङ्गात् इति हल् इति लोप इति चानुवर्तते । एङ्ह्रस्वादिति 'येन विधिस्तदन्तस्ये'ति तदन्तग्रहणम । **एङन्तादिति ।** एङन्तात—एङ्=एङ्वर्णः अन्ते यस्य तस्मात ।

---

**एकवचनं सम्बुद्धिरिति ।** सम्बोधनं अर्थ में जो प्रथमा होती है उसका एकवचन 'सु' सम्बुद्धिसंज्ञक होता है ।

**यस्मात्प्रत्ययविधिस्तदादि प्रत्ययेऽङ्गमिति**—जो प्रत्यय जिससे किया जाता है वह है आदि में जिसका, वैसा शब्दस्वरूप उस प्रत्यय के रहने पर अङ्ग होता है ।

**एङ्ह्रस्वात्सम्बुद्धेरिति ।** एङ्वर्ण अन्त में होने वाले तथा ह्रस्व अच् अन्त में होने वाले अङ्ग से परे हल् लुप्त होता है, यदि वह सम्बुद्धि का हो ।

ह्रस्वान्तात्—ह्रस्वः=एकमात्रिकाच् अन्ते यस्य तस्मात्। च=अन्यतम-लक्षणविशिष्टात्। अङ्गात्=अङ्गसंज्ञकात् पर इति। हल्=हल्वर्णः। लुप्यते=विलोपितो भवति न श्रूयत इति। स हल् सम्बुद्धेः=सम्बोधनेऽर्थे या भवति प्रथमा तस्या एकवचनस्य। चेत्।

**हे राम !**—हे इति सम्बोधनम् 'अथ सम्बोधनार्थकाः। स्युः प्याट् पाडङ्ग है हे भोः' इत्यमरः। रामशब्दात् प्रातिपदिकसंज्ञायां 'सम्बोधने चे'ति प्रथमा-विभक्तौ, एकत्वविवक्षातः 'द्व्येकयोर्द्विवचनैकवचने' इति एकवचने सौ, राम सु इति जाते, उकारस्येत्संज्ञालोपयोः, रामस् इति जाते, तस्य सः 'एकवचनं सम्बुद्धिरि'ति सम्बुद्धिसंज्ञायाम्, राम इत्येतस्य 'यस्मात्प्रत्ययविधिरि'ति अङ्ग-संज्ञायाञ्च 'एङ्ह्रस्वात्सम्बुद्धेरि'ति ह्रस्वान्तपरत्वेन रुत्वापवादेन सस्य लोपे, हे राम इति।

**हे रामौ**—रामशब्दात् सम्बोधने प्रथमाया द्विवचने औ विभक्तौ, गुणबाधेन प्राप्ताया वृद्धेरप्यपवादेन 'प्रथमयोः पूर्वसवर्णः' इति प्राप्तस्य पूर्वसवर्णदीर्घस्य 'नादिचि' इति निषेधे, वृद्धौ हे रामौ इति।

**हे रामाः**—रामशब्दात् सम्बोधने बहुत्वविवक्षायां प्रथमाया बहुवचने जसि, जकारस्य 'चुटू' इतीत्संज्ञया लोपे, सस्य 'हलन्त्यमि'तीत्संज्ञायां प्राप्तायां 'न

---

**हे राम**—'हे' का अर्थ सम्बोधन है। प्रातिपदिक राम शब्द से सम्बोधन अर्थ में प्रथमा विभक्ति होने पर एकत्व की विवक्षा होने से एकवचन सु के आ जाने से राम सु, उ की इत्संज्ञा एवं लोप से राम स्, स् को सम्बोधन का एक-वचन होने के कारण 'एकवचनं सम्बुद्धिः' से सम्बुद्धिसंज्ञा एवं 'राम' को 'यस्मात्प्रत्ययविधि॰' से अङ्गसंज्ञा होने पर ह्रस्व अङ्ग से परे सम्बुद्धि का हल् होने के कारण सकार का रुत्व के अपवादस्वरूप 'एङ्ह्रस्वात्सम्बुद्धेः' से लोप होने पर 'हे राम' हो गया।

**हे रामौ**—राम शब्द से सम्बोधन प्रथमा के द्विवचन में 'औ' के आ जाने से राम औ, प्राप्त गुण को बाधकर एच्पर होने से प्रवृत्त वृद्धि को बाधकर 'प्रथमयोः' पूर्वसवर्णः' से प्राप्त पूर्वसवर्ण को 'नादिचि' से निषेध होने पर वृद्धि होकर पूर्व एवं पर के स्थान में 'औ' के आ जाने से 'हे रामौ' रूप सिद्ध हो गया।

**हे रामाः**—राम शब्द से सम्बोधन में प्रथमा विभक्ति के बहुवचन में जस् के आ जाने एवं ज का 'चुटू' से इत्संज्ञा एवं लोप होने से राम अस्, स् की

(११०) अमि पूर्वः ६।१।१०७ ।। **अकोऽम्यचि पूर्वरूपमेकादेशः ।**

**रामम् । रामौ ।**

---

विभक्तौ तुस्माः' इति निषेधेन राम अस् इति स्थिते, सवर्णदीर्घापवादेन प्राप्तं पररूपं परत्वेन पूर्वसवर्णदीर्घे, सस्य रुत्वविसर्गयोः, हे रामाः इति ।

**अमि पूर्व इति ।** द्विपदमिदं सूत्रम् । अक इत्यनुवर्तते । **अक इति ।** अकः =अग्वर्णात् । अमि=असम्बन्धिनि । अचि=अजादौ परतः । पूर्वरूपम् । एकादेशः ।

**रामम्**—रामशब्दात् प्रातिपदिकसंज्ञायां, द्वितीयाविभक्तौ एकत्वविवक्षायामेकवचने अमि, मस्य 'हलन्त्यमि'तीत्संज्ञायां प्राप्तायां, तस्याः 'न विभक्तौ तुस्माः' इति निषेधेन राम अम् इति जाते, प्राप्तं सवर्णदीर्घं बाधित्वा पररूपे प्राप्ते तच्च बाधित्वा 'अमि पूर्वः' इति पूर्वरूपे रामम् इति ।

**रामौ**—रामशब्दात् प्रातिपदिकसंज्ञायां, द्वितीयाविभक्तिद्विवचने औ प्रत्यये, राम औ इति जाते, गुणं बाधित्वा प्राप्ताया वृद्धेरपवादत्वेन प्राप्तस्य पूर्वसवर्णदीर्घस्य 'नादिचि' इति निषेधेन वृद्धौ पूर्वपरयोः स्थाने औकारे, रामौ इति ।

---

'हलन्त्यम्' से प्राप्त इत्संज्ञा को 'न विभक्तौ तुस्माः' से निषेध होने से 'राम अस्' रहने पर प्राप्त सवर्णदीर्घ के अपवाद के रूप में 'अतो गुणे' से प्राप्त पररूप को परशास्त्र होने से बाधकर 'प्रथमयोः पूर्वसवर्णः' से पूर्वसवर्णदीर्घ होने पर रामास्, स् का रुत्व एवं विसर्ग होने से 'हे रामाः' हो गया ।

**अमि पूर्व इति ।** अग्वर्णों से अम् सम्बन्धी अच् परे रहने से पूर्वरूप एकादेश हो ।

**रामम्**—राम शब्द से द्वितीया विभक्ति के एकवचन में अम् के आ जाने से राम अम्, मकार की 'हलन्त्यम्' से प्राप्त इत्संज्ञा का 'न विभक्तौ तुस्माः' से निषेध होने से राम अम्, प्राप्त सवर्णदीर्घ के अपवाद के रूप में प्राप्त पररूप को बाधकर प्रवृत्त पूर्वसवर्णदीर्घ के अपवाद के रूप में 'अमि पूर्वः' से पूर्वरूप होने पर 'रामम्' हो गया ।

**रामौ**—राम शब्द से द्वितीया विभक्ति के द्विवचन में औ के आ जाने से राम औ, प्राप्त गुण को बाधकर प्राप्त वृद्धि के बाधक के रूप में प्राप्त पूर्वसवर्णदीर्घ का निषेध होने से वृद्धि होकर पूर्व एवं पर के स्थान में औकार के आने से 'रामौ' हो गया ।

( १११ ) लशक्वतद्धिते १।३।८ ॥ तद्धितवर्जं प्रत्ययाद्या लशकवर्गा इतः स्युः ।

( ११२ ) तस्माच्छसो नः पुंसि ६।१।१०३ ॥ कृतपूर्वसवर्णदीर्घात्परो यः शसः सस्तस्य नः स्यात्पुंसि ।

( ११३ ) अट्कुप्वाङ्नुम्व्यवायेऽपि ८।४।२॥ अट् कवर्गः पवर्गं

---

**लशक्वतद्धिते इति ।** लशकु अतद्धिते द्विपदमिदं सूत्रम् । इदिति आदिरिति प्रत्ययस्येति चानुवर्तते । अतद्धिते इति षष्ठयर्थे सप्तमी । लशकु इति लश्च शश्च कुश्चेति समाहारद्वन्द्वः । **तद्धितवर्जमिति ।** तद्धितवर्जं=तद्धितं वर्जयित्वा ये प्रत्ययाद्याः=प्रत्ययानामादौ भवाः । लशकवर्गाः=लकारशकारकवर्गवर्णाः । ते इतः=इत्संज्ञकाः । स्युरिति । इति शसः शकारस्येत्संज्ञा ।

**तस्माच्छसो नः पुंसि इति ।** तस्मात् शसः पुंसि चतुष्पदमिदं सूत्रम् । शसः इति षष्ठयन्तं पदमलोऽन्त्यस्येति सस्य । न इति प्रथमान्तम् । **कृतेति ।** कृत-पूर्वसवर्णदीर्घात्—कृतः='प्रथमयोः पूर्वसवर्णः' इति विहितः । पूर्वसवर्णदीर्घः= पूर्वस्य समानो वर्णो यत्र तादृशो यो दीर्घः यस्य तस्मात् तथाविधात् । परः= परवर्ती । यः । शसः=शस्विभक्तेः । सकारः । तस्य=शसः सस्येति । नः= नकारादेशः । स्यात् । पुंसि=पुंलिङ्गविषये ।

**अट्कुप्वाङ्नुम्व्यवायेऽपीति ।** अट्कुप्वाङ्नुम्व्यवाये अपि इति द्विपदमिदं सूत्रम् । 'रषाभ्यां नो णः समानपदे' इत्यनुवर्तते । एतेन 'तस्मादित्युत्तरस्ये'ति वर्णान्तराव्यवहितोत्तरवर्तिन एव प्राप्ते वचनमिदम् । अट्कुप्वाङ्नुम्व्यवाये—अट् इति प्रत्याहारः स च कुश्च पुश्च आङ् च नुम् च ते, तैः व्यवाये= व्यवधाने । अपि=च रषाभ्यामुत्तरस्य नो णः समानपद इति । अडिति=अट्प्रत्याहारः स्वरहयवरां समावेशेन । कवर्गः=कखगघङाः । पवर्गः=पफबभमाः । आङ्=

---

**लशक्वतद्धिते इति ।** तद्धित को छोड़कर अन्य प्रत्यय के आदि में रहे लकार, शकार एवं कवर्ग इत्संज्ञक हों ।

**तस्माच्छसो नः पुंसि इति ।** पूर्वसवर्णदीर्घ से परवर्ती जो शस् का सकार है उसका नकार हो पुंलिङ्ग में ।

**अट्कुप्वाङ्नुम्व्यवायेऽपि इति ।** अट् प्रत्याहार के वर्ण, कवर्ग, पवर्ग, आङ्, नुम् इन व्यस्त ( पृथक्-पृथक् ) अथ वा यथासम्भव मिले हुए भी से र तथा ष

**आङ् नुम् एतैर्व्यस्तैर्यथासम्भवं मिलितैश्च व्यवधानेऽपि रषाभ्यां परस्य नस्य णः समानपदे । इति प्राप्ते ।**

**( ११४ ) पदान्तस्य ८।४।३७ ॥ नस्य णो न । रामान् ।**

---

उपसर्गः । नुम् = नुमागमः । एतैः=एभिः । व्यस्तैः = पृथक्स्थितैः । यथासम्भवं= यथावसरम् । मिलितैः = संयुक्तैः च । व्यवधाने=आवरणे । अपि=च । रषाभ्यां =रेफषकाराभ्याम् परस्य=परवर्तिनः । नस्य=नकारस्य । णः=मूर्धन्यानुनासिकः । स्यात् । समानपदे = एकपदे इति । इति = सूत्रेणानेन । णत्वे = नस्य णकारे । प्राप्ते ।

**पदान्तस्येति** । नः णो न इत्यनुवर्तते । पदान्तस्य नः णो न इति । **नस्येति** । पदान्तस्य = पदान्तगतस्य । नस्य = नकारस्य । णः = णकारः । न = नैव इति ।

**रामान्**—रामशब्दात् प्रातिपदिकसंज्ञायां, द्वितीयाविभक्तिबहुवचने शसि, शसः शकारस्य 'लशक्वतद्धिते' इति इत्संज्ञायां लोपे च, सकारस्य 'हलन्त्यमि'तीत्संज्ञायां प्राप्तायां, शसो विभक्तित्वेन 'न विभक्तौ तुस्माः' इति निषेधेन राम अस् इति स्थिते, अकोऽकि परे प्राप्तं सवर्णदीर्घं बाधित्वा प्रवृत्तस्य 'अतो गुणे' इति पररूपस्यापि बाधेन पूर्वसवर्णदीर्घे, रामास् इति जाते, सः 'तस्माच्छसो नः पुंसी'ति नकारे, रामान् इति जाते, 'रषाभ्यां नो णः समानपदे' इत्यनु-

---

एवं न के बीच में व्यवधान होने पर भी रेफ एवं षकार से परवर्ती नकार का णत्व हो समान पद में । इससे णत्व के होने पर ।

**पदान्तस्येति** । पदान्त में रहे न का ण न हो ।

**रामान्**—राम शब्द से द्वितीया विभक्ति के बहुवचन में शस् के आने पर शकार का 'लशक्वतद्धिते' से इत्संज्ञा होकर लोप होने एवं 'स्' का 'हलन्त्यम्' से प्राप्त इत्संज्ञा को 'न विभक्तौ तुस्माः' से निषेध होने पर 'राम अस्' ऐसी स्थिति में अक् से अक् के परे होने से प्राप्त सवर्णदीर्घ के अपवाद के रूप में प्राप्त पररूप को परशास्त्र होने से 'प्रथमयोः पूर्वसवर्णः' से पूर्वसवर्णदीर्घ होने पर 'रामास्' हो गया । तब स् का 'तस्माच्छसो नः पुंसि' से नकार होने पर 'रामान्' हो गया । तब 'रषाभ्यां नो णः समानपदे' के अधिकार से 'अट्कुप्वाङ्-नुम्व्यवायेऽपि' से र एवं न के बीच में आ तथा मकार का व्यवधान होने पर भी णत्व प्राप्त होने से 'पदान्तस्य' से उसका निषेध होने से 'रामान्' हो गया ।

( ११५ ) टाङसिङसामिनात्स्याः ७।१।१२॥ **अदन्तादङ्गात् टादीनां क्रमादिनादयः स्युः । णत्वम् । रामेण ।**

( ११६ ) सुपि च ७।३।१०२॥ **यञादौ सुपि अतोऽङ्गस्य दीर्घः । रामाभ्याम् ।**

---

वृत्त्य 'अट्कुप्वाङ्नुम्व्यवायेऽपी'ति सूत्रेण आकारमकारव्यवधानेऽपि रकारयोगेन नस्य णत्वे प्राप्ते 'पदान्तस्य' इति तन्निषेधे, रामान् इति ।

**टाङसिङसामिनात्स्या इति ।** टाङसिङसाम् इनात्स्याः द्विपदमिदं सूत्रम् । अत इत्यनुवर्तते अङ्गस्येति च । टाश्च ङसिश्च ङस् च तेषाम् । षष्ठ्यन्तं पदं तेन स्थाने इत्यर्थः । इनात्स्याः=इनश्च आत् च स्यश्च ते । **अदन्तादिति ।** अदन्तात्= ह्रस्वाकारान्ताद् । अङ्गात्=अङ्गसंज्ञकात् यस्मात्प्रत्ययविधिस्तदादेः । परेषाम् । टादीनां=टा आदिर्येषान्ते तेषां टाङसिङसाम् । क्रमात्=अनुक्रमेण । इनादयः= इन आदिर्येषान्ते इनः आत् स्यः इत्येते; टा इत्येतस्य स्थाने इन इति, ङसेः स्थाने आत् इति, ङसः स्थाने स्य इति आदेशाः । स्युः । णत्वम्='रषाभ्यां नो णः समानपदे' इति 'अट्कुप्वाङ्नुम्व्यवायेऽपी'ति ।

**रामेण**–रामशब्दात् तृतीयैकवचने टाविभक्तौ, टकारस्य 'चुटू' इतीत्संज्ञायां लोपे च, राम आ इति स्थिते, आ इत्येतस्य 'टाङसिङसामिनात्स्याः' इति इना-देशे, राम इन इति जाते, गुणे रामेन, नः णत्वे—रामेण इति ।

**सुपि चेति ।** द्विपदमिदं सूत्रम् । अङ्गस्य अतः दीर्घः यञि इत्यनुवर्तते । **यञादाविति ।** यञादौ=यञ् इति प्रत्याहारः यवरलञमङणनझभानां समावेशेन स आदौ यस्य तस्मिन् तादृशे । सुपि=सुब्विभक्तौ । परे=परतः स्थिते । अतः= अकारान्तस्य । अङ्गस्य । दीर्घः ।

**रामाभ्याम्**—रामशब्दात् तृतीयाद्विवचने भ्यामि, राम भ्याम् इति जाते,

---

**टाङसिङसामिनात्स्या इति ।** अकारान्त अङ्ग से परे टा, ङसि एव ङस् के स्थान में क्रमशः इन, आत्, स्य ये आदेश हों । न का णत्व होता है ।

**रामेण**—राम शब्द से तृतीया विभक्ति के एकवचन में टा के आने पर टा का 'टाङसिङसामिनात्स्याः' से इन आदेश होने पर राम इन, गुण होने से रामे न, न का णत्व होने से 'रामेण' रूप सिद्ध हुआ ।

**सुपि चेति ।** यञ् प्रत्याहार के वर्ण आदि में होने वाले सुप् विभक्ति परे रहने पर अकारान्त अङ्ग का दीर्घ हो ।

( ११७ ) अतो भिस ऐस् ७।१।९ ॥ **अकारान्तादङ्गाद् भिस ऐस् स्यात् । अनेकाल्शित्सर्वस्य । रामैः ।**

( ११८ ) ङेर्यः ७।१।१३ ॥ **अतोऽङ्गात्परस्य ङेर्यादेशः ।**

---

मस्य 'हलन्त्यमि'ति प्राप्ताया इत्संज्ञायास्तस्य विभक्तित्वेन 'न विभक्तौ तुस्माः' इति निषेधेन राम भ्याम् इत्येव स्थिते, भ्यामः यञादिसुप्त्वेन रामस्याकारस्य 'सुपि चे'ति दीर्घे, रामाभ्यामिति ।

**अतो भिस ऐस् इति ।** त्रिपदमिदं सूत्रम् । अङ्गस्येत्यधिकारः । **अकारान्तादिति ।** अकारान्तात्=अकारोऽन्ते यस्य तस्मात् । अङ्गात् । परस्य । भिसः= भिस् इत्येतस्य स्थाने । ऐस्=ऐसादेशः स्यादिति । अनेकालिशत्सर्वस्य=ऐसः अनेकाल्त्वात्सर्वादेशः ।

**रामैः**—रामशब्दात् तृतीयाबहुवचने भिसि, सस्य 'न विभक्तौ तुस्माः' इति सकारस्येत्संज्ञानिषेधे, राम भिस् इति स्थिते, 'अतो भिस ऐस्' इति भिसः स्थाने अनेकाल्त्वात् ऐस्सर्वादेशे, राम ऐस् इति जाते, प्राप्तं गुणं बाधित्वा वृद्धौ, सकारस्य रुत्वविसर्गयोः, रामैः इति ।

**ङेर्य इति ।** ङेः यः द्विपदमिदं सूत्रम् । ङेरिति षष्ठ्यन्तं पदम् । तेन ङे इत्येतस्य स्थाने इति । अतः अङ्गादिति चानुवर्तते । **अत इत्यादि ।** अतः= अकारान्तात् । अङ्गात्=अङ्गभूतात् । परस्य=परिवर्तिनः । ङेः=ङे इत्येतस्य । यादेशः=य इत्यादेशः । अनेकाल्त्वात्सर्वादेशः ।

---

**रामाभ्याम्**—राम शब्द से तृतीया विभक्ति के द्विवचन में भ्याम् के आ जाने से 'राम भ्याम्' होने पर मकार की 'हलन्त्यम्' से प्राप्त इत्संज्ञा का 'न विभक्तौ तुस्माः' से निषेध होने से 'राम भ्याम्' ऐसे रहने पर राम के अकार का 'सुपि च' से दीर्घ होने से 'रामाभ्याम्' हो गया ।

**अतो भिस ऐस् इति ।** अकारान्त अङ्ग से परे भिस् का ऐस् आदेश हो । ऐस् से अनेक अल् वाला होने से भिस् के स्थान में सर्वादेश होता है ।

**रामैः**—राम शब्द से तृतीया विभक्ति के बहुवचन में भिस् के आ जाने से राम भिस्, भिस् के स्थान में 'अतो भिस ऐस्' से ऐस् सर्वादेश होने से 'राम ऐस्' हो गया एवं प्राप्त गुण को बाधकर वृद्धि होने से तथा स् का 'न विभक्तौ तुस्माः' से इत्संज्ञा के निषेध होने से रुत्व एवं विसर्ग होकर 'रामैः' हो गया ।

**ङेर्य इति ।** अकारान्त अंग से परे ङे का य आदेश हो ।

( ११९ ) स्थानिवदादेशोऽनल्विधौ १।१।५६ ।। आदेशः स्थानिवद् **भवति अलाश्रयभिन्ने कार्ये कर्तव्ये। इति स्थानिवत्। सुपि चेति दीर्घः। रामाय। रामाभ्याम्।**

---

**स्थानिवदादेशोऽनल्विधौ इति।** स्थानिवत् आदेशः अनल्विधौ त्रिपदमिदं सूत्रम्। **आदेश इति।** आदेशः=यस्य स्थाने यदन्यद्विधीयते तत् स्थानि, येन विधीयमानेन अन्यत्प्रसक्तं निवर्तते स आदेशः। **स्थानापन्न इति।** स्थानिवत्= स्थानिना तुल्यः स्थानिवत्=स्थानिधर्मकः। भवति। अलाश्रयभिन्ने=अल् आश्रयो यस्य अलाश्रयस्तस्मात्तादृशाद्भिन्ने अनलाश्रये इति। कार्ये=विधौ। कर्तव्ये। इति=इत्यनेन। स्थानिवत्=आदेशस्य स्थानिवद्भावः। 'सुपि च' इति यादिविभक्तिपरत्वेन दीर्घः।

**रामाय**—रामशब्दात् चतुर्थ्येकवचने ङेविभक्तौ, ङकारस्य 'लशक्वतद्धिते' इतीत्संज्ञायां लोपे च, राम ए इति जाते, प्राप्तं गुणं बाधित्वा प्राप्ताया वृद्धेर्बाधेन 'ङेर्यः' इति य इत्यादेशे, राम य इति जाते, यस्य 'स्थानिवदादेशोऽनल्विधौ' इति स्थानिवद्भावेन सुब्वद्भावात् रामशब्दाकारस्य 'सुपि चे'ति दीर्घे, रामाय इति।

**रामाभ्याम्**—रामशब्दात् चतुर्थीद्विवचने भ्यामि, मस्य 'न विभक्तौ तुस्माः'

---

**स्थानिवदादेशोऽनल्विधाविति।** आदेश स्थानिवत् होता है, यदि अल् में आश्रित विधि न हो। इससे य का स्थानिवद्भाव होता है। स्थानी वह है जिसके स्थान में कोई दूसरा आ जाता है और आदेश वह है जो स्थानी के स्थान में रहता है। स्थानिवद्भाव का अर्थ आदेश का स्थानिधर्मविशिष्ट होना है। ङे सुप् विभक्ति है और उसके स्थान में हुआ य स्थानिवद्भाव से सुप् विभक्ति की तरह ही होता है। तब 'सुपि च' से य को विभक्ति मानकर दीर्घ होता है।

**रामाय**—राम शब्द से चतुर्थी एकवचन में ङे के आने एवं ङकार की इत्संज्ञा एवं लोप होने से ए होकर राम ए, प्राप्त गुण को बाधकर प्रवृत्त वृद्धि को भी बाधकर 'ङेर्यः' से ङे के स्थान में य आदेश होने पर राम य, य को 'स्थानिवदादेशोऽनल्विधौ' से स्थानिवद्भाव होने के कारण उसे सुप् मानकर 'सुपि च' से दीर्घ होने पर रामाय हो गया।

**रामाभ्याम्**—राम शब्द से चतुर्थी द्विवचन में भ्याम् के आने एवं मकार की

( १२० ) बहुवचने झल्येत् । ७।३।१०३ ॥ **झलादौ बहुवचने सुप्यतोऽङ्गस्यैकारः । रामेभ्यः ।**

( १२१ ) वाऽवसाने ८।४।५६॥ **अवसाने झलां चरो वा स्युः । रामात्, रामाद् । रामाभ्याम् । रामेभ्यः । रामस्य ।**

---

इति इत्संज्ञानिषेधेन राम भ्याम् इति स्थिते, अकारस्य 'सुपि च'ेति दीर्घे, रामाभ्यामिति ।

**बहुवचने झल्येत् इति** । बहुवचने झलि एत् । त्रिपदमिदं सूत्रम् । अतोऽङ्गस्य इत्यनुवर्तते । **झलादाविति** । झलादौ = झल् आदौ यस्य तादृशे । बहुवचने । सुपि = सुब्विभक्तौ परतः । अतः अङ्गस्य । एत् = एकार इति ।

**रामेभ्यः**—रामशब्दात् चतुर्थीबहुवचने भ्यसि, सस्य 'न विभक्तौ तुस्माः' इतीत्संज्ञानिषेधेन राम भ्यस् इति जाते, 'सुपि च'ेति प्राप्तं दीर्घं बाधित्वा परत्वात् 'बहुवचने झल्येत्' इति अकारस्य एत्वे, सस्य रुत्वविसर्गयोः, रामेभ्यः इति ।

**वाऽवसाने इति** । वा अवसाने द्विपदमिदं सूत्रम् । झलामिति चर इति चानुवर्तते । **अवसाने इति** । अवसाने = अनन्तरवर्तिवर्णाभावे । झलां = झल्वर्णानाम् । वा = विकल्पेन । चरः = चर्वर्णाः । स्युः ।

**रामात्, रामाद्**—रामशब्दात् पञ्चमीविभक्त्यैकवचने ङसिप्रत्यये, इकारस्येत्संज्ञायां लोपे, राम अस् इति स्थिते, प्राप्तं सवर्णदीर्घं बाधित्वा 'टाङसिङ-

---

'न विभक्तौ तुस्माः' स इत्संज्ञा के निषेध होने से "राम भ्याम्' रहने पर 'सुपि च' से दीर्घ होकर रामाभ्याम् हो गया ।

**बहुवचने झल्येदिति** । झल् वर्ण आदि में होने वाले बहुवचन सुप् परवर्ती होने से अकारान्त अङ्ग का एकार हो ।

**रामेभ्यः**—राम शब्द से चतुर्थी बहुवचन में भ्यस् के आने पर स् के 'न विभक्तौ तुस्माः' से इत्संज्ञानिषेध से 'राम भ्यस्' रहने पर 'सुपि च' से प्राप्त दीर्घ को बाधकर परशास्त्र होने से 'बहुवचने झल्येत्' से अकार का एत्व होने पर एवं स् के रुत्व तथा विसर्ग होने से रामेभ्यः हो गया ।

**वाऽवसाने इति** । अवसान में झल् वर्ण का विकल्प से चर् वर्ण हो ।

**रामात्, रामाद्**—राम शब्द से पञ्चमी के एकवचन में ङसि विभक्ति के आ जाने पर इकार की इत्संज्ञा एवं लोप से 'राम अस्' होने पर अस् अथ वा

(१२२) **ओसि च ७।३।१०४।। ओसि परे अतोऽङ्गस्य एकारः।** **रामयोः।**

---

सामिनात्स्याः' इति असः आत् इत्यादेशे, राम आत् इति जाते, सवर्णदीर्घे रामात् इति जाते, 'झलां जशोऽन्ते' इति जश्त्वेन दकारे, रामाद् इति। तस्यावसानत्वेन 'वाऽवसाने' इति चर्त्वपक्षे तकारे रामात् इति।

**रामाभ्याम्**—रामशब्दात्पञ्चमीद्विवचने भ्यामि, मस्य विभक्तित्वेन इत्संज्ञा-निषेधे, 'सुपि चे'ति अकारान्ताङ्गस्य दीर्घे, रामाभ्याम् इति।

**रामेभ्यः**—रामशब्दात् पञ्चमीबहुवचने भ्यसि, स इत्संज्ञानिषेधे, अदन्ताङ्ग-स्य 'सुपि चे'ति प्राप्तं दीर्घं बाधित्वा 'बहुवचने झल्येत्' इत्येत्वे, रुत्वविसर्गयोः रामेभ्यः इति।

**रामस्य**—रामशब्दात् षष्ठ्येकवचने ङस् विभक्तौ, ङसः ङकारस्येत्संज्ञा-लोपे, सः इन्निषेधेन राम अस् इति स्थिते, प्राप्तं सवर्णदीर्घं बाधित्वा 'टाङ-सिङसामिनात्स्याः' इति ङसः स्थाने स्यादेशे, रामस्य इति।

**ओसि चेति।** द्विपदमिदं सूत्रम्। अतः इति एत् इति चानुवर्तते। **अत इति।** अतः=अकारान्तस्य। अङ्गस्य। एकारः=एकारादेशः।

---

'टाङसिङसामिनात्स्याः' से आत् आदेश होने पर राम आत्, सवर्णदीर्घ होने से रामात्, त् का 'झलां जशोऽन्ते' से जश्त्व होने से रामाद् हो गया। 'वाऽवसाने' से चर्त्व होने के पक्ष में रामात् हुआ।

**रामाभ्याम्**—राम शब्द से पञ्चमी के द्विवचन में भ्याम् के आने एवं म् की इत्संज्ञा के निषेध से राम भ्याम्; 'सुपि च' से दीर्घ होने पर रामाभ्याम् हो गया।

**रामेभ्यः**—राम शब्द से पञ्चमी विभक्ति के बहुवचन में भ्यस् के आ जाने पर स् की इत्संज्ञा का निषेध होने से राम भ्यस्, 'सुपि च' से प्राप्त दीर्घ को बाधकर 'बहुवचने झल्येत्' से अकार का एत्व एवं 'स्' का रुत्व तथा रेफ का विसर्ग होने से रामेभ्यः हो गया।

**रामस्य**—राम शब्द से षष्ठी विभक्ति के एकवचन में ङस् के आने पर ङस् के स्थान में 'टाङसिङसामिनात्स्याः' से स्य आदेश होने पर रामस्य हो गया।

**ओसि चेति।** अकारान्त अङ्ग का एकार हो, ओस् विभक्ति परे रहने से।

र्वः सर्वौ ।

ङ्गा (१२६) सर्वादीनि सर्वनामानि १।१।२७ ॥ सर्वादीनि शब्दस्वरूपाणि

स्य=तादृशसकारस्य । मूर्धन्यादेशः । ईषद्विवृतस्यः=ईषद्विवृतप्रयत्नस्य । राम्स्य । तादृशः ईषद्विवृतः । एव । षः ।

**रामेषु**—रामशब्दात् सप्तमीबहुवचने सुपि, पस्येत्संज्ञालोपयोः, राम सु इति जाते, अकारस्य 'बहुवचने झल्येत्' इति एत्वे, रामे सु इति जाते, सस्य प्रत्ययावयवत्वेन 'आदेशप्रत्यययोरि'ति मूर्धन्यादेशे, सस्य ईषद्विवृतप्रयत्नत्वात् मूर्धन्येषु तादृशस्य षस्यैव षत्वात् रामेषु इति ।

एवमिति । एवं=रामशब्दवत् । कृष्णादयः=कृष्णप्रभृतयः । अपि=च । अदन्ताः=अकारान्ताः शब्दाः साधनीया इति । यथा कृष्णः कृष्णौ कृष्णाः, हरः हरौ हराः । इत्यादि ।

**सर्वः**—सर्वशब्दात् प्रथमाविभक्त्यैकवचने सौ, उकारस्येत्संज्ञालोपयोः, सस्य रुत्वविसर्गयोः, सर्वः इति ।

**सर्वौ**—सर्वशब्दात् प्रथमाद्विवचने औ प्रत्यये, गुणं बाधित्वा प्रवृत्तायाः वृद्धेः बाधकत्वे प्राप्तस्य पूर्वसवर्णदीर्घस्य 'नादिचि' इति निषेधे, वृद्धौ—सर्वौ इति ।

**सर्वादीनि सर्वनामानीति** । द्विपदमिदं सूत्रम् । सर्व आदिर्येषान्तानि सर्वा-

---

रामेषु—राम शब्द से सप्तमी बहुवचन में सुप् के आने पर प्कार की इत्संज्ञा होकर लोप होने से राम सु, 'बहुवचने झल्येत्' से अकार का एकार होने पर रामे सु, स का आदेशप्रत्यययोः' से मूर्धन्य आदेश होकर ईषद्विवृत स के स्थान में वैसे ही ष के आने से रामेषु हो गया ।

इसी तरह कृष्ण आदि अकारान्त शब्द भी जान लेना चाहिए । जैसे—कृष्णः कृष्णौ कृष्णाः, हरः हरौ हराः आदि ।

**सर्वः**—सर्व शब्द से प्रथमा विभक्ति के एकवचन में सु के आने पर सर्व सु, उ की इत्संज्ञा एवं लोप, स् का रुत्व तथा अवसान होने से रेफ का विसर्ग होकर सर्वः हो गया ।

**सर्वौ**—सर्व शब्द से प्रथमा विभक्ति के द्विवचन में औ आने पर सर्व औ, गुण को बाध कर एचर होने से प्रवृत्त वृद्धि के बाधक के रूप में प्राप्त पूर्वसवर्ण-दीर्घ का 'नादिचि' से निषेध होने से वृद्धि होकर सर्वौ हो गया ।

**सर्वादीनि सर्वनामानीति** । सर्व आदि शब्द सर्वनामसंज्ञा वाले होते हैं । ये इस प्रकार हैं—

**सर्वनामसंज्ञानि स्युः । सर्व । विश्व । उभ । उभय । डतर डतम ( डतरडतमौ प्रत्ययौ ) । अन्य । अन्यतर । इतर । त्वत् । त्व । नेम । सम । सिम । पूर्वपरावरदक्षिणोत्तरापराधराणि व्यवस्थायामसंज्ञायाम् । स्वमज्ञातिधनाख्यायाम् । अन्तरं बहिर्योगोपसंव्यानयोः । त्यद् । तद् । यद् । एतद् । इदम् । अदस् । एक । द्वि ( एते त्यदादयः ) । युष्मद् । अस्मद् । भवतु । किम् । इति सर्वादयः ।**

**( १२७ ) जसः शी ७।१।१७ ।। अदन्तात्सर्वनाम्नो जसः शी स्यात् । सर्वे । सर्वम् । सर्वौ । सर्वान् । सर्वेण । सर्वाभ्याम् । सर्वैः ।**

---

दीनि सर्वप्रभृतिशब्दस्वरूपाणि । सर्वनामानि = सर्वनामसंज्ञानि । सर्वादीनीति । सर्वादीनि = सर्वप्रभृतीनि । शब्दस्वरूपाणि यानि तानि सर्वनामसंज्ञानि = सर्वनामसंज्ञा येषान्तानि । स्युरिति । सर्वः विश्व उभ उभय इत्येते । डतरडतमौ प्रत्ययौ, तेन तदन्तग्रहणं; यथा कतरः कतमः । अन्यः अन्यतरः न तु अन्यतमः । इतरः त्वत् त्व नेम सम सिम इत्येते पूर्व-पर-अवर-दक्षिण-उत्तर-अपर-अधर-शब्दाः व्यवस्थायाम् = अवधेर्नियमे । असंज्ञायां = संज्ञाभिन्नेऽर्थे एव । स्वम् अज्ञातिधनाख्यायां = बन्धुद्रविडभिन्नेऽर्थे एव । अन्तरं बहिर्योगोपसंव्यानयोः— बहिर्योगः = बाह्यभागेऽवस्थानं युक्तत्वेन उपसंव्यानं = वस्त्रादि तयोरर्थयोरेव । त्यदादयः = त्यदित्येतस्मादारभ्य द्विपर्यन्ताः त्यद् तद् यद् एतद् इदम् अदस् एक द्वि इत्येते । युष्मद् अस्मद् इत्येतौ भवतु = भातेर्डवतु इति डवतुप्रत्ययान्तो भवत्-शब्दः । किम् । इत्येते । सर्वादयः ।

**जशः शी इति** । द्विपदमिदं सूत्रम् । अत इति सर्वनाम्न इति चानुवर्तते ।

---

सर्व, विश्व, उभ, उभय, डतर-प्रत्ययान्त शब्द, डतम-प्रत्ययान्त शब्द, अन्य, अन्यतर, इतर, त्वत्, त्व, नेम, सम, सिम ।

पूर्व, पर, अवर, दक्षिण, उत्तर, अपर, अधर—ये शब्द संज्ञाभिन्न अवधि के नियम अर्थ में हैं ।

ज्ञाति एवं धन भिन्न अर्थ में स्व शब्द है ।

बाहर से जोड एवं वस्त्र अर्थ में अन्तर शब्द है ।

त्यद्, तद्, यद्, एतद्, इदम्, अदस्, एक, द्वि—ये त्यदादि शब्द, युष्मद् एवं अस्मद् शब्द । डवतु-प्रत्ययान्त भवत् शब्द और किम् शब्द ।

**जसः शी इति** । अकारान्त सर्वनाम से परे जस् के स्थान में शी आदेश हो ।

र्वेषु । शेषं रामवत् । एवं विश्वादयोऽप्यदन्ताः । उभशब्दो नित्यं द्विवचनान्तः ।
भौ २ । उभाभ्याम् ३ । उभयोः २ ।

---

**सर्वेषाम्**—सर्वनाम्नः सर्वशब्दात् आमि, नुटं बाधित्वा 'आमि सर्वनाम्नः ुट्' इति आमः सुटि, सर्वसाम् इति जाते, 'बहुवचने झल्येत्' इत्येत्वे षत्वे च—र्वेषाम् इति । एत्व

**सर्वस्मिन्**—सर्वशब्दात् ङौ, ङेः 'ङसिङ्योः स्मात्स्मिनावि'ति स्मिना-शे—सर्वस्मिन् इति । स्मिनः स्थानिवद्भावेन विभक्तित्वान्नस्य नेत्वम् । ओसि त्वेऽयादेशे—सर्वयोः इति । सुपि एत्वे षत्वे—सर्वेषु इति ।

**शेषं रामवदिति**। शेषं=जस्ङेङस्यांङिवर्जम् अन्यत्र विभक्तिषु रामशब्दव-रूपाणि सर्वशब्दस्यापीति ।

**एवमिति**। एवम्=सर्वशब्दोक्तप्रकारेण । विश्वादयः=विश्वप्रभृतयः र्वनामसंज्ञकाः । अदन्ताः=अकारान्ताः शब्दाः ज्ञेया इति । यथा—विश्वः वश्वौ विश्वे । विश्वस्मै विश्वाभ्याम् । विश्वस्मात् । विश्वेषाम् । विश्वस्मिन् ।

**उभाविति**। उभशब्दो नित्यं द्विवचनान्तः, द्वित्वविशिष्टस्य बोधकत्वात् । त प्रथमाद्विवचने औ प्रत्यये, पूर्वसवर्णदीर्घनिषेधेन वृद्धौ—उभौ इति । उभौ ।

---

**सर्वेषाम्**—सर्व शब्द से षष्ठी-बहुवचन में आम् के आने पर सर्व आम्, म् की संज्ञा का 'न विभक्तौ तुस्माः' से निषेध, आम् का 'आमि सर्वनाम्नः सुट्' से सुट् आगम, ट् एवं उ का इत्व तथा लोप होने पर सर्व साम्, 'बहुवचने झल्येत्' सर्व के अकार का एत्व हुआ एवं स का षत्व होने पर सर्वेषाम् हो गया ।

**सर्वस्मिन्**—सर्व शब्द से सप्तमी के एकवचन में ङि, ङि के स्थान में ङसिङ्योः स्मात्स्मिनौ' से स्मिन् आदेश, उसके स्थानिवद्भाव से विभक्ति होने न् के इत्संज्ञा का निषेध होने पर सर्वस्मिन् हो गया ।

शेष रूप राम शब्द जैसे ही होते हैं। केवल जस्, ङे, ङसि एवं ङि में पों में अन्तर होता है। आम् में नुट् के बदले सुट् होता है। सर्वे, सर्वस्मै, र्वस्मात्, सर्वेषाम्, सर्वस्मिन्—ये पाँच ही भिन्न रूप हैं ।

इसी तरह विश्व आदि अदन्त शब्दों के भी रूप होते हैं। जैसे—विश्वे, श्वस्मै, विश्वस्मात्, विश्वेषाम्, विश्वस्मिन् । शेष राम शब्द की तरह ।

उभ शब्द नित्य द्विवचनान्त होता है, क्योंकि वह द्वित्वविशिष्ट का ही धक होता है। इस कारण—उभौ २ उभाभ्याम् ३ उभयोः २ ऐसे रूप चलते

**( १३१ ) पूर्वपरावरदक्षिणोत्तरापराधराणि व्यवस्थायामसंज्ञायाम् १।१।३४ ॥ एषां व्यवस्थायामसंज्ञायां च सर्वनामसंज्ञा गणसूत्रात् सर्वत्र या प्राप्ता सा जसि वा स्यात् । पूर्वे, पूर्वाः ।**

---

भ्यामि 'सुपि चे'ति दीर्घे, मस्येत्संज्ञानिषेधेन—उभाभ्याम् । उभाभ्याम् । उभाभ्याम् । ओसि 'ओसि चे'ति अकारस्य एत्वेऽयादेशे, सस्येत्संज्ञानिषेधेन रुत्वविसर्गयोः—उभयोः । उभयोः । द्विवचने रूपाविशेषाद् उभशब्दस्येह पाठः केवलमकजर्थः—'अव्ययसर्वनाम्नामकच्प्राक्टेः' । उभौ इति उभकौ । उभयोऽन्यत्र । उभयशब्दस्य द्विवचनं नास्ति । तेन—उभयः उभये । उभयम् उभयान् । उभयेन उभयैः । उभयस्मै उभयेभ्यः । उभयस्मात् उभयेभ्यः । उभयस्य उभयेषाम् । उभयस्मिन् उभयेषु । डतरडतमौ प्रत्ययौ, तेन तदन्तौ ग्राह्यौ; केवलयोः प्रत्यययोः संज्ञायाः प्रयोजनाभावात् । यथा—कतरः कतरौ कतरे । कतमः कतमौ कतमे । अन्यः अन्यौ अन्ये । अन्यतरशब्दोऽव्युत्पन्नाः द्विविषये निर्द्धारकः । अन्यतरः अन्यतरौ अन्यतरे । अन्यतमोऽपि अव्युत्पन्नो बहुविषये निर्द्धारकः किन्तु न सर्वनाम । तेन—अन्यतमः अन्यतमौ अन्यतमाः । नेम इत्यर्धे सर्वनाम । सम इति सर्वार्थे । तुल्यार्थे तु न सर्वनामसंज्ञा, तेन समानाम् इति ।

**पूर्वपरावरदक्षिणोत्तरापराधराणि व्यवस्थायामसंज्ञायाम् इति** । पूर्वपरावरदक्षिणोत्तरापराधराणि व्यवस्थायाम् असंज्ञायाम् त्रिपदमिदं सूत्रम् । 'विभाषा जसि' ( १।१।३२ ) इत्यनुवर्तते । सर्वनामसंज्ञा इति च । **एषामिति** । एषां= पूर्व पर अवर दक्षिण उत्तर अपर अधर इत्येतेषाम् । व्यवस्थायां=व्यवस्था स्वा-

---

हैं रामशब्द जैसे । सर्वादिगण में उसका पढ़ना केवल उससे अकच् प्रत्यय के लिए है । अव्यय एवं सर्वनाम के टि से पहले अकज् होता है । जैसे—उभकौ ।

उभय शब्द द्विवचनान्त नहीं होता । अतः उभयः, उभये आदि इसके चौदह रूप होते हैं ।

डतर डतम प्रत्यय हैं । प्रत्यय ग्रहण से प्रत्ययान्त का ग्रहण होता है, क्योंकि केवल प्रत्यय की संज्ञा का कोई प्रयोजन नहीं । कतरे, कतमे, अन्ये अन्यतर अव्युत्पन्न शब्द है । अन्यतरे, अन्यतम भी अव्युत्पन्न है, लेकिन सर्वनाम नहीं, अतः अन्यतमाः । इतरे । नेम अर्ध अर्थ में सर्वनाम है—नेमे । सम सम्पूर्ण अर्थ में सर्वनाम है—समेषाम् । तुल्य अर्थ में नहीं—समानाम् ।

**पूर्वपरावरदक्षिणोत्तरापराधराणि व्यवस्थायामसंज्ञायामिति** । इन पूर्व, पर अवर, दक्षिण, उत्तर, अपर, अधर शब्दों को व्यवस्था अर्थात् नियम से अव

(१३२) स्वमज्ञातिधनाख्यायाम् १।१।३५ ॥ **ज्ञातिधनान्यवाचिनः स्वशब्दस्य गणसूत्रात्सर्वत्र या प्राप्ता सा संज्ञा जसि वा। स्वे, स्वाः। आत्मीया इत्यर्थः। आत्मान इति वा। ज्ञातिधनवाचिनस्तु स्वाः, ज्ञातयोऽर्था वा।**

---

भिधेयापेक्षावधिनियमस्तस्यां गम्यमानायां नियमेनावधिसापेक्षार्थे वर्तमानानाम्। असंज्ञायाम्=संज्ञाभिन्नेऽर्थे। या सर्वनामसंज्ञा। गणसूत्रात्=सर्वादिगणपठित-'पूर्वापरे'त्यादिसूत्रात्। सर्वत्र=सर्वास्वेव विभक्तिषु। प्राप्ता। सा=सर्वनामसंज्ञा। जसि=जस्विभक्तौ। वा=विकल्पेन। स्यात्।

**पूर्वे, पूर्वाः**—पूर्वशब्दात् जसि, सर्वनामसंज्ञाविकल्पेन सर्वनामपक्षे जसः 'जसः शी' इति श्यादेशे, शस्येत्संज्ञालोपयोः, गुणे—पूर्वे इति। सर्वनामसंज्ञाभावपक्षे तु जस्येत्संज्ञालोपयोः, पररूपं बाधित्वा पूर्वसवर्णदीर्घे, सस्य रुत्वविसर्गयोः—पूर्वाः इति। ङसौ स्मातः ङौ स्मिनो विकल्पेन—पूर्वस्मात्, पूर्वात्। पूर्वस्मिन्, पूर्वे। शेषं सर्ववत्।

**स्वमज्ञातिधनाख्यायामिति।** स्वम् अज्ञातिधनाख्यायाम् द्विपदमिदं सूत्रम्। विभाषा जसि सर्वनामसंज्ञा इति चानुवर्तते। **ज्ञातीति।** ज्ञातिधनान्यवाचिनः—ज्ञातिः=बन्धुः, धनं=वित्तं, ततोऽन्यस्यार्थस्य वाचिनः=बोधकस्य। स्वशब्दस्य। गणसूत्रेण=गणपाठपठितसूत्रेण। या। संज्ञा=सर्वनामसंज्ञा। प्राप्ता। सा। जसि=जस्विभक्तौ परे। वा=विकल्पेन स्यात्।

**स्वे, स्वाः**—सर्वनामसंज्ञाविकल्पेन तत्पक्षे जशः श्यादेशे—स्वे इति। तदभावपक्षे पूर्वसवर्णदीर्घे—स्वाः इति। अस्यार्थः—आत्मीयाः आत्मान इति वा। शेषं पूर्वशब्दवत्। ज्ञातिधनवाचिनः स्वशब्दस्य तु जसि स्वाः इत्येव, अस्यार्थस्तु ज्ञातयः=बान्धवाः अर्थाः द्रविडानि वा।

---

की अपेक्षा संज्ञाभिन्न में गणसूत्र से जो सर्वनामसंज्ञा सर्वत्र प्राप्त है वह जस् में विकल्प से हो।

**पूर्वे, पूर्वाः**—जस् में सर्वनामसंज्ञा होने से शी आदेश होकर पूर्वे हो गया। उसके अभाव में पूर्वसवर्णदीर्घ से—पूर्वाः हुआ। इसी तरह—अपरे, अपराः। अवरे, अवराः। दक्षिणे, दक्षिणाः। उत्तरे, उत्तराः। अधरे, अधराः।

**स्वमज्ञातिधनाख्यायामिति।** ज्ञाति अर्थात् बन्धु तथा धन भिन्न अर्थ का बोधक स्व शब्द को जो गणसूत्र से सर्वत्र सर्वनामसंज्ञा प्राप्त है वह जस् में विकल्प से हो।

**( १३३ ) अन्तरं बहिर्योगोपसंव्यानयोः १।१।३६ ॥** बाह्ये परिधानीये चार्थेऽन्तरशब्दस्य गणसूत्रात्सर्वत्र या संज्ञा प्राप्ता सा जसि वा । अन्तरे अन्तरा वा गृहाः, बाह्या इत्यर्थः । अन्तरे अन्तरा वा शाटकाः, परिधानीया इत्यर्थः ।

**( १३४ ) पूर्वादिभ्यो नवभ्यो वा ७।१।१६ ॥** एभ्यो ङसिङ्योः स्मात्स्मिनौ वा स्तः । पूर्वस्मात्, पूर्वात् । पूर्वस्मिन्, पूर्वे । एवं परादीनाम् । शेषं सर्ववत् ।

---

**अन्तरं बहिर्योगोपसंव्यानयोरिति ।** द्विपदमिदं सूत्रम् । विभाषा जसि सर्वनाम इत्यनुवर्तते । **बाह्य इति ।** बाह्ये = बहिर्भागगते । परिधानीये = वस्त्रादी च । अर्थे = अभिधेये । अन्तरशब्दस्य गणसूत्रात् सर्वत्र प्राप्ता या संज्ञा = सर्वनामसंज्ञा । सा । जसि = जस्विभक्तौ परे । वा स्यात् ।

**अन्तरे, अन्तराः**—जसि, सर्वनामसंज्ञाविकल्पेन तत्पक्षे जसः श्यादेशे—अन्तरे इति । तदभावपक्षे पूर्वसवर्णदीर्घे—अन्तराः वा गृहाः बाह्याः = बहिर्भवाः किन्तु संयुक्ता इत्यर्थः । अन्तरे अन्तरा वा शाटकाः, अस्यार्थः—परिधानीयाः परिधानवस्त्राणि इत्यर्थः ।

**पूर्वादिभ्यो नवभ्यो वा इति ।** पूर्वादिभ्यः नवभ्यः वा त्रिपदमिदं सूत्रम् । 'ङसिङ्योः स्मात्स्मिनौ' इत्यनुवर्तते । **पूर्वादिभ्य नवभ्य इति ।** पूर्वादिसूत्रत्रययोगेन = पूर्वादयः सप्त अज्ञातिधनार्थे स्वं बाह्यपरिधानीयार्थे अन्तरञ्चेति नवेति । वा इति 'ङसिङ्योः स्मात्स्मिनौ' वा । **एभ्य इति ।** एभ्यः = पूर्वादिभ्यः

---

**स्वे, स्वाः**—सर्वनामसंज्ञा होने से जस् के स्थान में शी आदेश होकर स्वे, अन्यत्र स्वाः हुआ । आत्मीय अथवा आत्माएँ इसका अर्थ है । ज्ञाति एवं धन अर्थ वाले का तो स्वाः = बन्धु जन अथवा धन ।

**अन्तरं बहिर्योगोपसंव्यानयोरिति ।** बाहर से योग एवं परिधानीय अर्थ में अन्तर शब्द को प्राप्त सर्वनामसंज्ञा जस् में विकल्प से हो ।

**अन्तरे अन्तराः वा**—सर्वनामसंज्ञा होने से जस् का शी होकर अन्तरे, अन्यत्र अन्तराः गृहाः = बाहरी इसका अर्थ है । अन्तरे अन्तरा वा शाटकाः = परिधानीय वस्त्र इसका अर्थ है ।

**पूर्वादिभ्यो नवभ्यो वेति ।** इनसे अर्थात् पूर्व आदि सात तथा स्व एवं अन्तर—इन नौ से ङसि एवं ङि के स्थान में स्मात् एवं स्मिन् विकल्प से हो ।

(१३५) प्रथमचरमतयाल्पार्धकतिपयनेमाश्च १।१।३३॥ एते जसि उक्तसंज्ञा वा स्युः। प्रथमे, प्रथमाः। द्वितये, द्वितयाः। शेषं रामवत्। नेमे, नेमाः। शेषं सर्ववत्। तीयस्य ङित्सु वा (वा०)। द्वितीयस्मै, द्वितीयाय इत्यादि। एवं तृतीयस्मै, तृतीयाय। निर्जरः।

---

सप्तभ्यः स्वान्तरशब्दाभ्याञ्चेति नवभ्यः। ङसिङ्योः=ङसि ङि इत्येतयोः। स्मात्स्मिनौ इत्येतौ क्रमात् स्तः।

**पूर्वस्मात्, पूर्वात्**—पूर्वशब्दात् ङसौ 'पूर्वादिभ्यो०' इति स्माद्विकल्पेन—पूर्वस्मात् इति। पक्षे 'टाङसिङसामिनात्स्याः' इति आति, सवर्णदीर्घे—पूर्वात् इति। **पूर्वस्मिन्, पूर्वे**—ङेः स्मिन् विकल्पेन—पूर्वस्मिन् इति। पक्षे गुणे—पूर्वे। एवं परादीनाम्=परादिशब्दानाम्। यथा—परे, पराः। परस्मात्, परात्। परस्मिन्, परे। अवरे, अवराः। अवरस्मात्, अवरात्। अवरस्मिन्, अवरे। एवं दक्षिण उत्तर अपर अधर स्व अन्तर इत्येतेषामपि जस्ङसिङिषु प्रत्येकं रूपद्वयमिति। शेषं सर्ववत् रूपमिति। आमि—पूर्वेषां, परेषां, स्वेषाम्। ङेविभक्तौ—पूर्वस्मै, परस्मै, स्वस्मै इत्यादि इति। शेषं तु रामवदेव।

**प्रथमचरमतयाऽल्पार्धकतिपयनेमाश्चेति**। द्विपदमिदं सूत्रम्। विभाषा जसि सर्वनामसंज्ञा इत्यनुवर्तते। **एते इति**। एते=प्रथमचरमशब्दौ तयप्प्रत्ययान्तशब्दाः द्वितय-त्रितयप्रभृतयः अल्प-अर्ध-कतिपय-नेमशब्दाः एते सप्त। जसि परे। उक्तसंज्ञा=सर्वनामसंज्ञा। वा। स्युः। नेमशब्दस्य अर्धेऽर्थे सार्वत्रिकी संज्ञाऽनेन जसि विकल्प्यते। अन्येषां तु सा विकल्पेन जसि क्रियते।

**प्रथमे, प्रथमाः**—प्रथमशब्दात् जसि, 'प्रथमे'त्यादिना विकल्पेन सर्वनामसंज्ञायां, जसः श्यादेशे, गुणे—प्रथमे इति। तदभावपक्षे पूर्वसवर्णदीर्घे—प्रथमाः इति। शेषं रामवत्, विभक्त्यन्तरे सर्वनामसंज्ञाभावात्। चरमे चरमाः, शेषं

---

**पूर्वस्मात्, पूर्वात्**—स्मात् न होने के पक्ष में आत्। **पूर्वस्मिन्, पूर्वे**—स्मिन् न होने के पक्ष में गुण। इसी तरह पर आदि का भी जानना चाहिए। शेष सर्व शब्द जैसा ही जानना चाहिए।

**प्रथमचरमतयाल्पार्धकतिपयनेमाश्चेति**। ये प्रथम, चरम शब्द, तय-प्रत्ययान्त शब्द, अल्प, अर्ध, कतिपय एवं नेम शब्द जस् में विकल्प से सर्वनामसंज्ञा वाले हो।

**प्रथमे, प्रथमाः**—सर्वनामसंज्ञा होने के पक्ष में जस् का शी होकर प्रथमे,

**( १३६ ) जराया जरसन्यतरस्याम् ७।२।१०१ ।। जराशब्दस्य जरस् वा स्यादजादौ विभक्तौ । पदाङ्गाधिकारे तस्य च तदन्तस्य च ( प० )।**

---

रामवत् । द्वितये द्वितयाः, शेषं रामवत् । अल्पे अल्पाः, शेषं रामवत् । अर्धे अर्धाः, शेषं रामवत् । कतिपये कतिपयाः, शेषं रामवत् । नेमे नेमाः, शेषं सर्ववत् । तस्य सर्वादिगणपाठात् ।

**तीयस्य ङित्सु वेति ।** तीयस्य = तीयप्रत्ययान्तस्य । ङित्सु = ङेङसिङिषु । वा = विकल्पेन सर्वनामसंज्ञेति ।

**द्वितीयस्मै, द्वितीयाय**—सर्वनामसंज्ञापक्षे ङेः स्मै, तदभावपक्षे ङेर्यः 'सुपि चे'ति दीर्घः । एवं ङसौ—द्वितीयस्मात्, द्वितीयात् । ङौ—द्वितीयस्मिन्, द्वितीये । एवं तृतीयस्मै, तृतीयाय इत्यादि ज्ञेयम् । शेषं रामवत्, विभक्त्यन्तरे सर्वनामसंज्ञाभावात् ।

**निर्जरः**—निर्गता जरा यस्मात्स निर्जरः । निर्जरशब्दात्प्रथमैकवचने सौ, उकारस्येत्संज्ञालोपयोः, सस्य रुत्वविसर्गयोः—निर्जरः इति ।

**जराया जरसन्यतरस्यामिति ।** जरायाः जरस् अन्यतरस्याम् त्रिपदमिदं सूत्रम् । अचि विभक्तौ इत्यनुवर्तते । जराया इति षष्ठ्यन्तं पदम् । **जराशब्दस्येति ।** जराशब्दस्य = जरा इति शब्दस्य स्थाने । जरस् आदेशः । वा = विकल्पेन । स्यात् । अजादौ = अच् आदौ यस्य तथाभूते । विभक्तौ परत इति ।

**पदाङ्गेति ।** पदाङ्गाधिकारे = पदस्य अङ्गस्य च अधिकारे पदाधिकारे

---

अन्यथा प्रथमाः हो गया । चरमे, चरमाः । द्वितये, द्वितयाः । अल्पे, अल्पाः । अर्धे, अर्धाः । शेष राम शब्द की तरह । नेमे, नेमाः । शेष सर्व शब्द की तरह ।

**तीयस्य ङित्सु वेति ।** तीय-प्रत्ययान्त का ङित् अर्थात् ङे, ङसि एवं ङि में विकल्प से सर्वनामसंज्ञा हो ।

द्वितीयस्मै, द्वितीयाय । द्वितीयस्मात्, द्वितीयात् । द्वितीयस्मिन्, द्वितीये । इसी तरह तृतीय का भी जानना चाहिए । जैसे–तृतीयस्मै, तृतीयाय इत्यादि ।

**निर्जरः**—'निर्गता जरा अस्मादि'ति निर्जरः' । निर्जर शब्द से सु के आने पर उ की इत्संज्ञा एवं लोप तथा स् का रुत्व एवं विसर्ग होने से निर्जरः हो गया ।

**जराया जरसन्यतरस्यामिति ।** जरा शब्द के स्थान में विकल्प से जरस् आदेश हो, अजादि विभक्ति परवर्ती रहने पर ।

( १३७ ) दीर्घाज्जसि च ६।१।१०५ ।। दीर्घाज्जसि इचि च परे पूर्वसवर्णदीर्घो न स्यात् । विश्वपौ । विश्वपाः । हे विश्वपाः । हे विश्वपौ । हे विश्वपाः । विश्वपाम् । विश्वपौ ।

---

दीर्घाज्जसि चेति । दीर्घात् जसि च त्रिपदमिदं सूत्रम् । इचि इति न पूर्वसवर्णदीर्घ इति चानुवर्तते । दीर्घादिति । दीर्घात् । जसि । इचि = इजादौ च । परे । न पूर्वसवर्णदीर्घ इति ।

विश्वपौ—विश्वपाशब्दात् प्रथमाद्विवचने औविभक्तौ, विश्वपा औ इति जाते, प्राप्तं गुणं बाधित्वा एच्परत्वेन प्रवृत्ताया: वृद्धेरपि बाधकत्वेन प्रवृत्तस्य 'प्रथमयोः पूर्वसवर्णः' इति पूर्वसवर्णदीर्घस्य 'दीर्घाज्जसि च' इति निषेधे ( वस्तुतस्तु एतादृशस्थले 'नादिचि' इत्यनेनैव निषेधः सिध्यति । जसि तु पूर्वसवर्णदीर्घेऽपि न काऽपि क्षतिः । 'दीर्घादि'ति सूत्रं गौर्यौ गौर्य्य इत्याद्यर्थमेव । अत्र तु गतानुगतिकन्यायेन पठितम् । ), वृद्धौ—विश्वपौ इति । जसि 'दीर्घाज्जसि चे'ति पूर्वसवर्णनिषेधे, सवर्णदीर्घे—विश्वपाः इति । पूर्वसवर्णदीर्घेऽपि विश्वपाः एव । अमि पूर्वरूपे—विश्वपाम् इति । औटि पूर्वसवर्णदीर्घनिषेधेन वृद्धौ—विश्वपौ इति ।

---

विच् आदि प्रत्ययविशिष्ट जो हैं वे धातुत्व को नहीं छोडते, अतः विश्वपा में पा धातु ही हुआ । विच् के कृत्प्रत्यय होने से तदन्त होने के नाते विश्वपा को 'कृत्तद्धितसमासाश्च' से प्रातिपदिक संज्ञा होती है, तब उससे प्रथमाविभक्ति के एकवचन में सु के आने एवं उकार की इत्संज्ञा तथा लोप एवं स् का रुत्व तथा रेफ का विसर्ग होने से विश्वपाः हो गया ।

दीर्घाज्जसि चेति । दीर्घ से परे जश् एवं इजादि विभक्ति होने से पूर्वसवर्णदीर्घ न हो ।

विश्वपौ—'विश्वपा औ' इस स्थिति में प्राप्त गुण को बाधकर प्रवृत्त वृद्धि के बाधक के रूप में प्राप्त पूर्वसवर्णदीर्घ का 'दीर्घाज्जसि च' से निषेध होने पर ( वस्तुतः यहाँ 'नादिचि' से ही काम चलता है 'दीर्घाज्जसि च' तो गौर्यौ गौर्यः आदि के लिए है ) वृद्धि होने से विश्वपौ हो गया । जस् में 'दीर्घाज्जसि च' से पूर्वसवर्णदीर्घ के निषेध होने से सवर्णदीर्घ होकर अथवा 'नादिचि' लगाने के पक्ष में पूर्वसवर्णदीर्घ होकर—विश्वपाः हो गया । अम् में पूर्वरूप होने से विश्वपाम् । औट् में पूर्वसवर्णदीर्घ के निषेध से वृद्धि—विश्वपौ ।

( १३८ ) सुडनपुंसकस्य १।१।४३ ॥ **स्वादिपञ्चवचनानि सर्वनामस्थानसंज्ञानि स्युरक्लीबस्य ।**

( १३९ ) स्वादिष्वसर्वनामस्थाने १।४।१७ ॥ **कप्प्रत्ययावधिषु स्वादिष्वसर्वनामस्थानेषु पूर्वं पदं स्यात् ।**

( १४० ) यचि भम् १।४।१८ ॥ **यादिष्वजादिषु च कप्प्रत्ययावधिषु स्वादिष्वसर्वनामस्थानेषु पूर्वं भसंज्ञं स्यात् ।**

---

**सुडनपुंसकस्येति** । सुट् अनपुंसकस्य द्विपदमिदं सूत्रम् । सर्वनामस्थानमित्यनुवर्तते । सुडिति प्रत्याहारः सुपि सु इत्यारभ्य औटष्टकारेणेति । अनपुंसकस्य सुट् सर्वनामस्थानमिति । **स्वादीति** । स्वादिपञ्चवचनानि=सु आदिर्येषान्तानि तादृशानि यानि पञ्च च तानि वचनानि सु औ जस् अम् औट् इत्येतानि तानि सर्वनामस्थानसंज्ञानि=सर्वनामस्थानं संज्ञा येषान्तानि तथाविधानि । स्युः अक्लीबस्य—न तु क्लीबस्य=नपुंसकलिङ्गस्येति । स्त्रीपुंसोः सुट् सर्वनामस्थानमिति भावः ।

**स्वादिष्वसर्वनामस्थान इति** । स्वादिषु असर्वनामस्थाने द्विपदमिदं सूत्रम् । स्वादिष्विति सप्तमीनिर्देशेन पूर्वमित्याक्षिप्यते पदमित्यनुवर्तते । तेन स्वादिषु परेषु पूर्वं पदं न तु सर्वनामस्थाने इत्यर्थलाभः । **कप्प्रत्ययेति** । कप्प्रत्ययावधिषु—कप्प्रत्ययः='उरःप्रभृतिभ्यः कप्' ( ५।४।१५१ ), अवधिः=उत्तरावधिर्येषां तेषु । असर्वनामस्थानेषु=सर्वनामस्थानभिन्नेषु । स्वादिषु=स्वादिप्रत्ययेषु परेषु । पूर्वम् । पदं=पदसंज्ञकम् । स्यात् ।

**यचि भम् इति** । द्विपदमिदं सूत्रम् । यचि इति सप्तम्या पूर्वमाक्षिप्यते । यचि=य् च अच्च तयोः समाहारो यच् तस्मिन् यचि । स्वादिष्वसर्वनामस्थाने इत्यनुवर्तते । **यादिष्विति** । यादिषु=यकार आदौ येषान्तेषु तथाविधेषु । अजादिषु=अच् आदौ येषान्तेषु तादृशेषु । च । कप्प्रत्ययावधिषु=कप्प्रत्ययो-

---

**सुडनपुंसकस्येति** । सु आदि पाँच वचन सर्वनामस्थान संज्ञा वाले हो, यदि वे नपुंसकलिङ्ग के न हों तो ।

**स्वादिष्वसर्वनामस्थाने इति** । कप् प्रत्यय उत्तर अवधि वाले सर्वनामस्थान भिन्न स्वादि के परे रहने से पूर्व को पदसंज्ञा हो ।

**यचि भमिति** । कप् प्रत्यय उत्तर अवधि वाले सर्वनामस्थान-भिन्न यकार तथा अच् आदि में होने वाले सु आदि के परे रहने से पूर्व को भसंज्ञा हो ।

( १४१ ) आकडारादेका संज्ञा १।४।१ ॥ इत ऊर्ध्वं कडाराः कर्मधारय इत्यतः प्रागेकस्यैकैव संज्ञा ज्ञेया । या पराऽनवकाशा च ।

( १४२ ) आतो धातोः ६।४।१४० ॥ आकारान्तो यो धातुस्तदन्तस्य भसंज्ञकस्य च लोपः । अलोऽन्त्यस्य । विश्वपः । विश्वपा । विश्वपाभ्यामित्यादि । । एवं शङ्खध्मादयः । धातोः किम् ? हाहान् । हरिः । हरी ।

---

त्तरावधिकेषु । स्वादिषु=सु आदिर्येषान्तेषु । असर्वनामस्थानेषु=सर्वनामस्थानभिन्नेषु । पूर्वम् । भसंज्ञं=भः संज्ञा यस्य तत् तादृशं भसंज्ञकम् । स्यात् ।

**आकडारादेका संज्ञा इति** । आ कडाराद् एका संज्ञा चतुष्पदमिदं सूत्रम् । **इत इति** । इतः ऊर्ध्वम्=अस्मादुत्तरम् । 'कडाराः कर्मधारये' ( २।२।३८ ) इत्यतः प्राक्=पूर्वम् । एकस्य एका एव संज्ञा । **या परेति** । तत्र या=संज्ञा । परा अनवकाशा=अन्यत्र अप्राप्तावसरा च सैव भवति । द्वयोः सावकाशयोः परा संज्ञा बलवती अन्यतरस्य निरवकाशत्वे तु सैवेति भावः ।

**आतो धातोरिति** । द्विपदमिदं सूत्रम् । भस्येति लोप इति चानुवर्तते । **आकारान्त इति** । आकारान्तः=आकारः अन्ते यस्य तादृशः । यः । धातुः=गणपठितः क्रियावाचिशब्दः । तदन्तस्य । भस्य=भसंज्ञकस्य । अङ्गस्य । लोपः=अश्रवणम् । स्यात् ।

**विश्वपः**—विश्वपाशब्दाद् द्वितीयाबहुवचने शसि, शस्येत्संज्ञालोपयोः सस्येत्संज्ञानिषेधे च विश्वपा अस् इति जाते, असः सर्वनामस्थानभिन्नस्वादित्वेन 'स्वादिष्वसर्वनामस्थाने' इति पूर्वस्य पदसंज्ञायाम्, तस्य अजादिस्वादित्वेन

---

**आकडारादेका संज्ञा इति** । इसके अनन्तर 'कडाराः कर्मधारये' सूत्र से पहले एक की एक ही संज्ञा जान लेना चाहिए । उस पर भी जो पर है एवं अन्यत्र अवकाश वाली नहीं है वही होती है । अर्थात् दोनों के सावकाश होने से परासंज्ञा किसी एक के निरवकाश होने से तो वही होगी । निरवकाश वह है जो अन्यत्र न हो पाए, सावकाश वह है जो अन्यत्र भी हो पाए ।

**आतो धातोरिति** । आकारान्त जो धातु है उसके अन्त वाले अङ्ग का लोप हो ।

**विश्वपः**—विश्वपा से शस् के आने एवं श् की इत्संज्ञा तथा लोप होने एवं स् की इत्संज्ञा के निषेध होने से विश्वपा अस् होने पर प्राप्त गुण को बाधकर प्रवृत्त वृद्धि के बाधक के रूप में पूर्वसवर्णदीर्घ के प्राप्त होने पर शस्

तत्पूर्वस्य 'यचि भम्' इति भसंज्ञायाश्च प्राप्तायाम् 'आकडारादेका संज्ञा' इति एकाया एव संज्ञाया विधानेन तत्रापि 'या पराऽनवकाशा चे'ति अनवकाशत्वेन भसंज्ञायां, पूर्वसवर्णदीर्घं बाधित्वा 'आतो धातोरि'ति सूत्रेण 'अलोऽन्त्यस्ये'ति व्यवस्थया अन्त्यस्याकारस्य लोपे, विश्वपस्, तस्य सुबन्तत्वेन 'सुप्तिङन्त-मि'ति पदत्वेन सस्य रुत्वविसर्गयोः—विश्वपः इति। एवमजादौ यथा—विश्वपा। विश्वपे। विश्वपः। विश्वपः। विश्वपाम्। विश्वपि। हलादौ तु विश्वपाभ्यां विश्वपाभिरित्यादि। एवं शङ्खध्मादयः शब्दाः। शङ्खं धमतीति शङ्खध्मा—शङ्खध्माः शङ्खध्मौ शङ्खध्माः। ध्मां–ध्मौ–ध्मः इत्यादि विश्वपावत्। धातोः किम् ?='आतो धातोरि'ति सूत्रे धातोरिति ग्रहणं किमर्थम् ? हाहान् इत्यादौ धातुभिन्नाकारस्य भस्यापि लोपो मा भूदिति। हाहाः हाहौ हाहाः। हाहां हाहौ हाहान्—पूर्वसवर्णदीर्घेण सस्य नकारः। हाहा—टापरे सवर्णदीर्घं एव। हाहाभ्यां हाहाभिः। हाहै। हाहाः। हाहाः हाहौः हाहाम्। हाहे हाहौः हाहासु। 'आतो धातोरि'त्यत्र योगविभागेन आतः इति पृथक् पाठेन क्वचिद-धातोरप्याकारलोपः। यथा क्त्वा अस् क्त्वः। क्त्वो ल्यप्। श्ना अस् श्नः।

---

के सर्वनामस्थान-भिन्न स्वादि होने के कारण पूर्व को अर्थात् विश्वपा को 'स्वादिष्वसर्वनामस्थाने' से पदसंज्ञा एवं अजादि स्वादि होने के कारण 'यचि भम्' से भसंज्ञा के होने पर 'आकडारादेका संज्ञा' से एक ही संज्ञा होने के नियम से उनमें 'जो पर एवं अनवकाश है वही है' इससे अन्यत्र अनवकाश होने एवं पर होने के कारण पूर्व को भसंज्ञा होकर 'आतो धातोः' से 'अलोऽन्त्य-स्य' के नियम से आकार का लोप होकर विश्वपस् तथा विश्वपस् को सुबन्त होने के कारण 'सुप्तिङन्तं पदम्' से पदसंज्ञा होने से पदान्त में स्थित स् का रुत्व एवं रेफ का विसर्ग होने से विश्वपः हो गया।

टा में आकार के लोप से विश्वपा। ङे में—विश्वपे। ङसि में—विश्वपः। ङस् में—विश्वपः। आम् में—विश्वपाम्। ङि में—विश्वपि। ओस् में—विश्वपोः। हलादि में पदसंज्ञा होने से लोपाभाव से—विश्वपाभ्याम्, विश्व-पाभिः, विश्वपाभ्यः, विश्वपासु इत्यादि। सम्बोधन में—हे विश्वपाः विश्वपौ विश्वपाः।

इसी तरह शङ्खध्मा आदि शब्द को भी जानना चाहिए। जैसे—शङ्ख-ध्माः–शङ्खध्मौ–शङ्खध्माः। शङ्खध्मां–ध्मौ–ध्मः। शङ्खध्मा–ध्माभ्यां–

( १४३ ) जसि च ७।३।१०९ ॥ ह्रस्वान्तस्याङ्गस्य गुणः स्याज्जसि रे। हरयः।

---

हरिः—इकारान्तो हरिशब्दः व्युत्पन्नोऽव्युत्पन्नश्च। अव्युत्पन्नपक्षे 'अर्थवदि'ति युत्पन्नपक्षे कृदन्तत्वेन 'कृत्तद्धिते'ति सूत्रेण प्रातिपदिकसंज्ञायां, प्रथमैकवचने ौ, उकारस्येत्संज्ञालोपयोः, हरिस् इत्येतस्य सुबन्तत्वेन पदसंज्ञायां, सस्य रुत्वे, फस्य अवसानत्वेन विसर्गे—हरिः इति।

हरी—हरिशब्दात् प्रथमाद्विवचने औप्रत्यये, हरि औ इति जाते, इकारा-ौकारे परे 'इको यणची'ति प्राप्तं यणं बाधित्वा 'प्रथमयोः पूर्वसवर्णः' इति र्वसवर्णदीर्घे—हरी इति।

**जसि चेति**। जसि च द्विपदमिदम्। ह्रस्वस्येति गुण इति चानुवर्तते। **ह्रस्वान्तस्येति**। ह्रस्वान्तस्य—ह्रस्वः अन्ते यस्य तादृशस्य। अङ्गस्य=यस्मा-प्रत्ययविधिस्तदादेः। गुणः। जसि विभक्तौ परतः।

---

माभिः। शङ्खध्मे-ध्माभ्यां-ध्माभ्यः। शङ्खध्मः-ध्माभ्यां-ध्माभ्यः। ाङ्खध्मः-ध्मोः-ध्माम्। शङ्खध्मि-ध्मोः-ध्मासु। हे शङ्खध्माः-ध्मौ-ध्माः।

सूत्र में 'धातु का' क्यों कहा गया? हाहा आदि में धातु-भिन्न आकार का ोप न हो इसलिए।

हाहाः-हौ-हाः। हाहां-हौ-हान्—पूर्वसवर्णदीर्घ होने से शस् के स् का । हाहा—टा में सवर्णदीर्घ। हाहाभ्यां-भिः। ङे में वृद्धि—हाहै-हाभ्यां-हाभ्यः। ङसि में सवर्णदीर्घ—हाहाः-हाभ्यां-हाभ्यः। ङस् में भी—हाहाः। ओस् में वृद्धि—हाहौः। आम् में सवर्णदीर्घ—हाहाम्। ङि में गुण—हाहे-हौः-हासु। हे हाहाः-हौ-हाः।

**हरिः**—व्युत्पन्न हरि शब्द को कृदन्त होने के कारण 'कृत्तद्धित०' सूत्र से, अव्युत्पन्न को 'अर्थवदधातु०' सूत्र से प्रातिपदिकसंज्ञा होने पर प्रथमा के एक-वचन में सु के आ जाने से हरि सु, उ की इत्संज्ञा तथा लोप से हरिस्, इसको सुबन्त होने के कारण 'सुप्तिङन्तं०' सूत्र से पदसंज्ञा होने पर स् के पदान्त होने से रुत्व एवं अवसान होने से रेफ का विसर्ग होकर हरिः हो गया।

**हरी**—हरि शब्द से प्रथमा द्विवचन में औ के आने पर यण् को बाधकर 'प्रथमयोः०' सूत्र से पूर्वसवर्णदीर्घ होने से हरी हो गया।

**जसि चेति**। जस् के परे रहने से ह्रस्व अङ्ग का गुण हो।

(१४४) ह्रस्वस्य गुणः ७।३।१०८ ॥ ह्रस्वस्य गुणः स्यात्सम्बुद्धौ। एङ्ह्रस्वात्सम्बुद्धेः। हे हरे। हरिम्। हरी। हरीन्।

---

**हरयः**—हरिशब्दात् प्रथमाबहुवचने जसि, जस्येत्संज्ञालोपयोः, हरि अस् इति जाते, प्राप्तं यणं बाधित्वा प्रवृत्तस्य पूर्वसवर्णदीर्घस्य बाधकत्वेन जस्परत्वात् 'जसि चे'ति हरीकारस्य गुणे, आन्तरतम्येन इकारस्य स्थाने एकारे, हरे अस् इति जाते, जसः सर्वनामस्थानसंज्ञात्वेन पूर्वस्य पदसंज्ञाभावेन पदान्तत्वाभावात्पूर्वरूपस्याप्रवृत्तौ 'एचोऽयवायावः' इति अयादेशे, हरयस्, तस्य सुबन्तत्वेन पदत्वे, सस्य रुत्वे, रेफस्यावसानत्वे विसर्गे च हरयः इति।

**ह्रस्वस्य गुणेति**। द्विपदमिदम्। सम्बुद्धौ इत्यनुवर्तते। 'एकवचनं सम्बुद्धिरि'ति। ह्रस्वस्य=ह्रस्वान्तस्य। गुणः स्यात्। सम्बुद्धौ परतः। सम्बुद्धिस्तु सम्बोधने एकवचनमेव।

**हे हरे**—हरिशब्दात् सम्बोधनेऽर्थे प्रथमाविभक्तौ, तदेकवचने सौ, तस्य 'एकवचनं सम्बुद्धिरि'ति सम्बुद्धिसंज्ञायां, ह्रस्वात्परत्वेन प्राप्तस्य 'एङ्ह्रस्वात्सम्बुद्धेरि'ति हल्लोपस्य परत्वान्नित्यत्वाच्च बाधकत्वेन 'ह्रस्वस्य गुणः' इति हरीकारस्य गुणे, सूकारस्येत्संज्ञालोपयोः, हरेस् इति जाते, तस्य पदत्वेन प्राप्तस्य सस्य रुत्वस्य बाधकत्वेन एङ्परत्वात् 'एङ्ह्रस्वात्सम्बुद्धेरि'ति स्लोपे, हे हरे इति। हे हरी। हे हरयः।

---

**हरयः**—हरि शब्द से प्रथमा बहुवचन में जस् के आने पर ज् की 'चुटू' से इत्संज्ञा तथा लोप एवं स् की इत्संज्ञा के निषेध से हरि अस्, प्राप्त यण् को बाधकर प्रवृत्त पूर्वसवर्णदीर्घ के बाधक के रूप में 'जसि च' से हरि के इकार के गुण होने से हरे अस्, जस को सर्वनामस्थानसंज्ञा होने के कारण पदसंज्ञा न हो पाने से पदान्त के अभाव में 'एङः०' सूत्र की अप्रवृत्ति से 'एचोऽयवायावः' से अय् आदेश होने एवं स् के रुत्व तथा विसर्ग से हरयः हो गया।

**ह्रस्वस्य गुणेति**। सम्बुद्धि के परे रहने पर ह्रस्व अङ्ग का गुण हो।

**हे हरे !**—हरि शब्द से सम्बोधन अर्थ में एकवचन सु के आने पर हरि सु, उ की इत्संज्ञा एवं लोप होने से हरिस्, सु को 'एकवचनं सम्बुद्धिः' से सम्बुद्धिसंज्ञा होने पर ह्रस्व से परे होने के कारण 'एङ्ह्रस्वात्सम्बुद्धेः' से प्राप्त हल्लोप को पर एवं नित्य शास्त्र होने से बाधकर 'ह्रस्वस्य गुणः' से हरि के इकार का गुण होने पर अन्तरतम एकार के आने से हरेस्, तब रुत्व को बाध

सखी

( १४५ ) शेषो घ्यसखि १।४।७ ।। शेष इति स्पष्टार्थम् । ह्रस्वौ यौ इदुतौ तदन्तं सखिवर्जं घिसंज्ञम् ।

( १४६ ) आङो नाऽस्त्रियाम् ७।३।१२० ।। घेः परस्याङो ना स्यादस्त्रियाम् । आङिति टासंज्ञा । हरिणा । हरिभ्याम् । हरिभिः ।

---

हरिम्—अमि, हरि अम् इत्यवस्थायां यण्निषेधेन प्राप्तं पूर्वसवर्णदीर्घं बाधित्वा 'अमि पूर्वः' इति पूर्वरूपे—हरिम् इति । औटि पूर्वसवर्णदीर्घेण—हरी । शसि पूर्वसवर्णदीर्घे, शसः सस्य नत्वे—हरीन् इति ।

शेषो घ्यसखीति । शेषः घि असखि त्रिपदमिदं सूत्रम् । शेषः=इदुदन्तमनदी=अनदीसंज्ञं ह्रस्वेकारोकारान्तं यत्तच्छेष इति 'यू स्त्र्याख्यौ नदी' 'वाऽमि' 'ङिति ह्रस्वश्च' इत्येतेभ्योऽवशिष्टः शेषः स इदुदन्तः घिसंज्ञः न तु सखि । शेष इत्यादि । शेष इति=सूत्रे शेष इति । स्पष्टार्थम्='आकडारादेका संज्ञे'ति एकसंज्ञाधिकारात् अनवकाशया नदीसंज्ञया बाधादेव सिद्धेऽपि यत्र नदीसंज्ञा तत्र न घिसंज्ञेति स्पष्टार्थम् । ह्रस्वौ=एकमात्रिकौ । यौ । इदुतौ=इकारान्तोकारौ । तदन्तं=तदन्तर्वर्ति । सखिवर्जं=सखिशब्दभिन्नम् । शब्दस्वरूपम् । घिसंज्ञमिति ।

आङो नाऽस्त्रियाम् इति । आङः ना अस्त्रियाम् त्रिपदमिदं सूत्रम् । आङ

---

कर एङन्त होने के कारण 'एङ्ह्रस्वात्सम्बुद्धेः' से हल् का लोप होकर हरे हो गया । औ में पूर्वसवर्णदीर्घ से—हरी । जस् में गुण एवं अयादेश से—हरयः ।

हरिम्—हरि शब्द से द्वितीया एकवचन में अम् के आने पर यण् के बाधक के रूप में प्राप्त पूर्वसवर्णदीर्घ को बाधकर 'अमि पूर्वः' से पूर्वरूप होने पर हरिम् हो गया । औट् में पूर्वसवर्णदीर्घ से—हरी । शस् में पूर्वसवर्णदीर्घ एवं स् के स्थान में न् होने से—हरीन् ।

शेषो घ्यसखीति । शेष शब्द स्पष्टता के लिए है । शेष का अर्थ है—नदीसंज्ञा न होने वाले इ उ अन्त वाले शब्द । दो संज्ञाओं में नदीसंज्ञा अनवकाशा होने से ही उससे घिसंज्ञा बाधित होती है और जहाँ नदीसंज्ञा होती है वहाँ घिसंज्ञा नहीं होती । फिर भी शेष=नदीसंज्ञा से इतर कहना स्पष्टता के लिए है । ह्रस्व जो इ एवं उकार है वह है अन्त में जिसका, ऐसा सखि को छोड़ कर अन्य शब्द घिसंज्ञक होता है ( यदि नदीसंज्ञक न हो तो ) ।

आङो नाऽस्त्रियामिति । घिसंज्ञक शब्द से परे आङ् के स्थान में ना आदेश हो स्त्रीलिङ्ग से भिन्न में । आङ् यह टा की संज्ञा है ।

( १४७ ) घेर्ङिति ७।३।१११ ।। घिसंज्ञकस्य ङिति सुपि गुणः । हरये । हरिभ्याम् । हरिभ्यः । ( ङसौ ) गुणे कृते—

---

इति षष्ठ्यन्तं पदम् । घेरित्यनुवर्तते । घेरिति । घेः = घिसंज्ञकात्परस्य । आङः = आ इत्येतस्य । ना = ना आदेशः स्यात् । अस्त्रियाम् = न तु स्त्रियाम् । आङ् इति टासंज्ञा = टा इत्येतस्य संज्ञा प्राचां मतेनेति ।

**हरिणा**—हरिशब्दात् तृतीयैकवचने टाविभक्तौ, टस्य 'चुटू' इतीत्संज्ञायां लोपे च, हरि आ इति स्थिते, हरिशब्दस्य ह्रस्वेकारान्तात् अनदीत्वाच्च 'शेषो घ्यसखी'ति घिसंज्ञायाम्, यणं बाधित्वा घेः परत्वेन 'आङो नाऽस्त्रियामि'ति टास्थाने नादेशे, णत्वे—हरिणा इति । भ्यामि—हरिभ्याम् । भिसि—हरिभिः ।

**घेर्ङितीति** । घेः ङिति द्विपदमिदम् । गुण इति सुपि इति चानुवर्तते । घेरिति षष्ठ्यन्तम् । **घिसंज्ञकस्येति** । घिसंज्ञकस्य = घिः संज्ञा यस्य तस्य । ङिति = ङ् इत् यस्य तादृशे । सुपि = सुब्विभक्तौ परे । गुणः इति ।

**हरये**—हरिशब्दात् चतुर्थ्येकवचने ङे विभक्तौ, ङकारस्य 'लशक्वतद्धिते' इतीत्संज्ञायां लोपे, हरि ए इति जाते, प्राप्तं यणं बाधित्वा हरिशब्दस्य 'शेषो घ्यसखि' इति घिसंज्ञकत्वेन ङे इत्यस्य ङित्त्वेन च 'घेर्ङिति' इति हरिशब्दे-कारस्य गुणेन एकारे, अयादेशे—हरये इति । हरिभ्याम् । हरिभ्यः ।

**गुणे इति** । ङसौ 'घेर्ङिति' इति गुणे विहिते—

---

**हरिणा**—हरि शब्द से टा, ट् की इत्संज्ञा तथा लोप, हरि आ, हरि शब्द को 'शेषो घ्यसखि' से घिसंज्ञा होने से यण् के बाधक के रूप में 'आङो नाऽस्त्रि-याम्' से आ का नाभाव एवं णत्व से हरिणा हो गया । भ्याम् में—हरिभ्याम् । भिस् में—हरिभिः ।

**घेर्ङितीति** । घिसंज्ञक शब्द का ङित् सुप् परे होने पर गुण हो ।

**हरये**—हरि शब्द से चतुर्थी एकवचन में ङे, ङ् की इत्संज्ञा तथा लोप होने पर हरि ए, हरि को घिसंज्ञा होने से यण् को बाधकर ङित् पर होने के कारण 'घेर्ङिति' से गुण होने पर एकार के आने से हरे ए, अयादेश होने पर हरये हो गया । भ्याम् में—हरिभ्याम् । भ्यस् में स् के रुत्व-विसर्ग से—हरिभ्यः ।

ङसि में गुण होने के बाद—

( १४८ ) ङसिङसोश्च ६।१।११० ।। एङो ङसिङसोरति पूर्वरूपमेकादेशः । हरेः । हरेः । हर्योः । हरीणाम् ।

( १४९ ) अच्च घेः ७।३।११९ ।। इदुद्भ्यामुत्तरस्य ङेरौत् घेरन्तादेशश्चाकारः । वृद्धिः । हरौ । हर्योः । हरिषु । एवं कव्यादयः ।

---

ङसिङसोश्चेति । ङसिङसोः च द्विपदमिदं सूत्रम् । एङः इति अति इति पूर्वं इति चानुवर्तते । एङ इति । एङः=एङ्प्रत्याहारवर्णात् । ङसिङसोः । अति=अकारे । परे । पूर्वरूपम् एकादेशः पूर्वपरयोः स्थाने इति ।

हरेः—हरिशब्दात् पञ्चम्यैकवचने ङसौ, ङकारेकारयोः यथायोगमित्संज्ञायां लोपे, हरि अस् इति जाते, हरिशब्दस्य घिसंज्ञकत्वेन 'घेर्ङिति' इति ङित्परत्वेन गुणे कृते, हरे अस् इति जाते, प्राप्तमयादेशं प्रबाध्य 'ङसिङसोश्च' इति पूर्वरूपैकादेशे, सस्य रुत्वविसर्गयोः—हरेः इति । हरिभ्याम् । हरिभ्यः ।

हरेः—हरिशब्दात् ङसि, ङस्येत्संज्ञालोपयोः, हरि अस् इति जाते, हरिशब्दस्य घिसंज्ञकत्वेन ङसः ङित्त्वेन च 'घेर्ङिति' इति गुणे, हरे अस् इति जाते, 'ङसिङसोश्चे'ति पूर्वरूपैकादेशे, सस्य सत्वविसर्गयोः—हरेः इति ।

हर्योः—ओसि, यणि, सस्य रुत्वविसर्गयोः—हर्योः इति ।

हरीणाम्—आमि, यणो बाधकत्वेन 'ह्रस्वनद्यापो नुट्' इति आमो नुटि, हरि नाम् इति जाते, 'नामि' इति दीर्घे, नस्य 'अट्कु०' इति सूत्रेण णत्वे—हरीणाम् इति ।

अच्च घेरिति । अत् च घेः त्रिपदमिदं सूत्रम् । घेः अत् च इत्यन्वयः ।

---

ङसिङसोश्चेति । एङ् से ङसि एवं ङस् के अकार के परे होने से पूर्वरूप एकादेश हो ।

हरेः—हरि से पञ्चमी एकवचन में ङसि के आने पर ङकार एवं इकार की इत्संज्ञा तथा लोप होने से हरि अस्, हरि के घिसंज्ञक होने से यण् को बाधकर 'घेर्ङिति' से गुण होने पर हरे अस्, अयादेश को बाधकर 'ङसिङसोश्च' से पूर्वरूप होने एवं सकार के रुत्व-विसर्ग होने से हरेः हो गया । भ्याम् में—हरिभ्याम् । भ्यस् में—हरिभ्यः ।

हरेः—ङस् में 'घेर्ङिति' से गुण एवं 'ङसिङसोश्च' से पूर्वरूप होने तथा स् के रुत्व-विसर्ग से हरेः हो गया । ओस् में यण् होने एवं स् के रुत्व तथा विसर्ग होने से—हर्योः । आम् में 'ह्रस्वनद्यापो नुट्' से नुट् होने तथा 'नामि' से दीर्घ होने पर हरीणाम् हो गया ।

**(१५०) अनङ् सौ ७।१।९३।। सख्युरङ्गस्यानङादेशः स्यादसम्बुद्धौ सौ।**

---

इदुद्भ्याम् इति ङेः इति औत् इति चानुवर्तते । यत्र न नदीसंज्ञा न च घिसंज्ञा ततः ङेरौत् घिसंज्ञकस्य तु ङेरौत् अच्च अन्तादेश इति सूत्राशयः । नदीसंज्ञकात्तु ङेरामेव भवति इदुद्भ्यामपि ।

**इदुद्भ्यामिति** । इदुद्भ्याम् = ह्रस्वेकारोकाराभ्याम् । घिसंज्ञकाभ्यामिति । उत्तरस्य = परस्य । ङेः = ङि इत्येतस्य । औत् = औ इत्यादेशः । घेः = घिसंज्ञकस्य । अकारः = अन्तादेशश्च । वृद्धिः ।

**हरौ**—हरिशब्दात् ङौ, ङस्येत्संज्ञालोपयोः, हरि इ इति जाते, हरिशब्दस्य घिसंज्ञकत्वात् यणो बाधकत्वेन प्रवृत्तं सवर्णदीर्घं बाधित्वा 'अच्च घेः' इति ङेरौकारादेशे इकारस्य अकारादेशे च, हर औ इति जाते, वृद्धौ—हरौ इति । ओसि यणि—हर्योः । सुपि सस्य मूर्धन्यादेशे—हरिषु ।

**एवमिति** । एवं = हरिशब्दवदेव । कव्यादयः=कविप्रभृतयो घिसंज्ञकेकारान्तशब्दाः । यथा—कविः कवी कवयः । कविम् कवी कवीन् । कविना कविभ्याम् कविभिः । कवये । कवेः । कवेः कव्योः कवीनाम् । कवौ । हे कवे इत्यादि ।

**अनङ् साविति** । द्विपदमिदं सूत्रम् । 'सख्युरसम्बुद्धौ' इत्यनुवर्तते । सख्युरिति षष्ठ्यन्तं पदम् । **सख्युरिति** । सख्युः = सखिशब्दस्य । अनङ् = अनङ् इत्यादेशः । असम्बुद्धौ = सम्बुद्धिभिन्ने । सौ = सुविभक्तौ परे ।

---

**अच्च घेरिति** । इ एवं उ से परवर्ती ङि का औत् हो और घिसंज्ञक शब्द का अकार अन्तादेश भी हो । वृद्धि ।

**हरौ**—हरि से ङि, ङ् की इत्संज्ञा तथा लोप से हरि इ, हरि शब्द को घिसंज्ञा होने से यण् को बाधकर प्रवृत्त सवर्णदीर्घ के भी बाधक के रूप में 'अच्च घेः' से ङि का औ आदेश एवं हरि के इकार का अकार अन्तादेश होने पर हर औ, गुण को बाधकर वृद्धि होने से हरौ हो गया । ओस् में यण् होने से—हर्योः । सुप् में मूर्धन्यादेश होने से—हरिषु ।

इसी तरह कवि आदि इकारान्त घिसंज्ञक शब्दों के रूप भी बनते हैं । जैसे—कविः कवी कवयः । कविना । कवये । कवेः । कवौ । हे कवे इत्यादि ।

**अनङ् साविति** । सखि शब्द का अनङ् आदेश हो सम्बुद्धिभिन्न सु परे रहने से ।

(१५१) अलोऽन्त्यात् पूर्व उपधा १।१।६५॥ **अन्त्यादलः पूर्वो वर्ण उपधासंज्ञः।**

( १५२ ) सर्वनामस्थाने चाऽसम्बुद्धौ ६।४।८॥ **नान्तस्योपधाया दीर्घः स्यादसम्बुद्धौ सर्वनामस्थाने।**

( १५३ ) अपृक्त एकालप्रत्ययः १।२।४१॥ **एकालप्रत्ययो यः स अपृक्तसंज्ञः स्यात्।**

( १५४ ) हल्ङ्याब्भ्यो दीर्घात्सुतिस्यपृक्तं हल् ६।१।६८॥ **हलन्तात्परं दीर्घौ यौ ङ्यापौ तदन्ताच्च परं सुतिसीत्येतदपृक्तं हल्लुप्यते।**

---

**अलोऽन्त्यात्पूर्व उपधा इति।** अलः अन्त्यात् पूर्वः उपधा चतुष्पदमिदं सूत्रम्। अन्त्यात् अलः पूर्व उपधा इत्यन्वयः। **अन्त्यादिति।** अन्त्यात्=अन्ते भवात्। अलः। पूर्वः=वर्णान्तराव्यवहितत्वेन प्राक्स्थितः। वर्णः। उपधासंज्ञः= उपधा संज्ञा यस्य स तादृशः भवतीति।

**सर्वनामस्थाने चासम्बुद्धौ इति।** सर्वनामस्थाने च असम्बुद्धौ त्रिपदमिदं सूत्रम्। नोपधाया इति दीर्घ इति चानुवर्तते। **नान्तस्येति।** नान्तस्य=न अन्ते यस्य तस्य। उपधायाः=उपधासंज्ञकस्य। दीर्घः। असम्बुद्धौ=सम्बुद्धिभिन्ने। सर्वनामस्थाने=सर्वनामस्थानसंज्ञकविभक्तौ परे।

**अपृक्त एकालप्रत्यय इति।** द्विपदमिदं सूत्रम्। एकालप्रत्ययः=एकः अल् यत्र तादृशो यः प्रत्ययः। यः। सः। अपृक्तसंज्ञः=अपृक्त इति संज्ञा यस्य स तादृशः भवतीति।

**हल्ङ्याब्भ्यो दीर्घात्सुतिस्यपृक्तं हल् इति।** हल्ङ्याब्भ्यः दीर्घात् सुतिसि अपृक्तं हल् पञ्चपदमिदं सूत्रम्। सुतिसि इति लुप्तषष्ठीकं पदम्। दीर्घात् हल्ङ्यापः सुतिसि इत्येतेषाम् अपृक्तं हल् इति। हल् इति षष्ठ्यर्थे प्रथमा। लोप इत्यनुवर्तते। हलन्तादिति। हलन्तात्=हल् अन्ते यस्य तस्मात्। परम्। दीर्घौ। यौ।

---

**अलोऽन्त्यात् पूर्व उपधा इति।** अन्त्य का जो अल् है उससे पूर्व का वर्ण उपधा होता है।

**सर्वनामस्थाने चाऽसम्बुद्धौ इति।** नकारान्त उपधा का दीर्घ हो सम्बुद्धिभिन्न सर्वनामस्थान परे रहने से।

**अपृक्त एकालप्रत्यय इति।** एक ही अल् वाला प्रत्यय अपृक्तसंज्ञक हो।

**हल्ङ्याब्भ्यो दीर्घात्सुतिस्यपृक्तं हल् इति।** हलन्त से पर एवं दीर्घ जो ङी

(१५५) प्रत्ययलोपे प्रत्ययलक्षणम् १।१।६२ ॥ **प्रत्यये लुप्तेऽपि तदाश्रितं कार्यं स्यात् ।**

(१५६) नलोपः प्रातिपदिकान्तस्य ८।२।७॥ **प्रातिपदिकसंज्ञकं यत्पदं तदन्तस्य नस्य लोपः । सखा ।**

---

ङ्यापौ=ङी च आप् च तौ । तदन्तात्=ङ्यन्तात् आबन्ताच्च । परम् । सु ति सि इति एतत्=सम्बद्धं सुसम्बद्धं तिसम्बद्धं सिसम्बद्धश्च । अपृक्तम्=अपृक्त-संज्ञकम् । हल् । लुप्यते इति ।

**प्रत्ययलोपे प्रत्ययलक्षणमिति** । द्विपदमिदं सूत्रम् । **प्रत्यय इति** । प्रत्यये । लुप्ते=लोपादिना श्रवणाविषयीभूते । अपि । तदाश्रितं=प्रत्ययाश्रितम् । कार्यम् । स्यात् ।

**नलोपः प्रातिपदिकान्तस्येति** । द्विपदमिदं सूत्रम् । न इति प्रातिपदिक इति च लुप्तषष्ठीकं पदम् । तेन प्रातिपदिकस्य अन्तस्य नः लोप इति सूत्राशयः । पदस्येत्यनुवर्तते । **प्रातिपदिकमिति** । प्रातिपदिकसंज्ञकं=प्रातिपदिकसंज्ञाविषयीभूतम् । यत् पदम्=पदसंज्ञकम् । पदसंज्ञा च 'सुप्तिङन्तं पदम्' 'नः क्ये' 'सिति च' 'स्वादिष्वसर्वनामस्थाने' इति । तदन्तस्य=तदन्तर्वर्तिनः । नस्य=नकारस्य । लोप इति ।

**सखा**—सखिशब्दात्प्रथमैकवचने सौ, उकारस्येत्संज्ञालोपयोः, सखिस् इति जाते, सोः सम्बुद्धिभिन्नत्वेन तत्परे 'अनङ् सौ' इति सख्युरनङादेशे, तस्यानेकाल्त्वात्सर्वस्य स्थाने प्राप्ते, ङित्त्वात् 'ङिच्चे'ति अन्त्यस्यालः इकारस्य स्थानेऽवस्थाने सख् अनङ् स् इति जाते, ङकाराकारयोरित्संज्ञायां लोपे च,

---

एवं आप् है, तदन्त वाले से पर जो सु ति सि का अपृक्त हल् है उसका लोप हो ।

**प्रत्ययलोपे प्रत्ययलक्षणमिति** । प्रत्यय का लोप होने पर भी उसमें आश्रित कार्य होता है ।

**नलोपः प्रातिपदिकान्तस्येति** । प्रातिपदिकसंज्ञक जो पद है उसके अन्त में रहने वाले न् का लोप हो ।

**सखा**—सखि शब्द से प्रथमा एकवचन में सु के आने एवं सु के उकार की इत्संज्ञा तथा लोप होने से सखिस्, सु के सम्बुद्धि-भिन्न होने से 'अनङ् सौ' से सखि शब्द को अनङ् आदेश, अनेकाल् होने पर भी ङित् होने के कारण सखि

**( १५७ ) सख्युरसम्बुद्धौ ७।१।९२ ।। सख्युरङ्गात्परं सम्बुद्धिवर्जं सर्वनामस्थानं णिद्वत् स्यात् ।**

**( १५८ ) अचो ञ्णिति ७।२।११५ ।। ञिति णिति च परे अजन्ताङ्ग-**

---

सखन् स् इति जाते, अनकारस्य 'अलोऽन्त्यात्पूर्व उपधा' इत्युपधासंज्ञायां, तस्य 'सर्वनामस्थाने चाऽसम्बुद्धौ' इति सोः सर्वनामस्थानत्वेन दीर्घे, सखान् स् इति जाते, सः 'अपृक्त एकाल्प्रत्ययः' इति एकाल्त्वेन अपृक्तसंज्ञायां, हल्परत्वेन तस्य 'हल्ङ्याब्भ्यो दीर्घादि'ति लोपे, सखान् इति जाते, तस्य 'प्रत्ययलोपे प्रत्ययलक्षणमि'ति प्रत्ययलक्षणेन सुबन्तत्वेन सुप्तिङन्तसूत्रेण पदसंज्ञायां, नकारस्य 'एकदेशविकृतन्यायेन' पदान्तत्वात् 'नलोपः प्रातिपदिकान्तस्ये'ति लोपे—सखा इति ।

**सख्युरसम्बुद्धौ इति ।** सख्युः असम्बुद्धौ द्विपदमिदं सूत्रम् । णित इति सर्वनामस्थाने इति चानुवर्तते । सख्युरिति पञ्चम्यन्तं पदम् । सख्युः = सखिशब्दात् । अङ्गात् । परम् । सम्बुद्धिवर्जं = सम्बुद्धिभिन्नम् । सर्वनामस्थानं = स्त्रीपुंसोः स्वादिपञ्चकम् । णिद्वत् । स्यात् ।

**अचो ञ्णितीति ।** अचः ञ्णिति द्विपदमिदं सूत्रम् । अच इति षष्ठ्यन्तम् । वृद्धिरित्यनुवर्तते । ञ् च ण् च तयोरित् यस्य ञ्णित् । ञिति = ञ् इत् यस्य

---

के अन्त्य अल् इ के स्थान में उसका अवस्थान, ङकार एवं अकार की इत्संज्ञा तथा लोप से सखन् स्, अन् के अकार का 'अलोऽन्त्यात्पूर्व उपधा' से उपधासंज्ञा होने पर उसका नान्त होने एवं सु के सम्बुद्धि-भिन्न सर्वनामस्थान होने के कारण 'सर्वनामस्थाने चासम्बुद्धौ' से दीर्घ होकर सखान् स्, स् का एक अल् होने के कारण 'अपृक्त एकाल्प्रत्ययः' से अपृक्तसंज्ञा होकर उसके सु से सम्बन्धित एवं हल् से परे अपृक्त होने के कारण 'हल्ङ्याब्भ्यो०' सूत्र से लोप होने पर सखान्, इसका प्रत्ययलक्षण से सुबन्त होने के कारण 'सुप्तिङन्तं०' सूत्र से पदसंज्ञा होने पर 'एकदेशविकृतन्याय' से सखान् के न् का पदान्त होने से 'नलोपः प्रातिपदिकान्तस्य' से लोप होने पर सखा हो गया ।

**सख्युरसम्बुद्धौ इति ।** सखि शब्द अङ्ग से परे सम्बुद्धिभिन्न सर्वनामस्थान णित् जैसा होता है ।

**अचो ञ्णितीति ।** ञित् एवं णित् परे होने पर अजन्त अङ्ग की वृद्धि होती है ।

**स्य वृद्धिः स्यात् । सखायौ । सखायः । हे सखे । हे सखायौ । हे सखायः । सखिम् । सखी । सखीन् । सख्या । सख्ये ।**

---

ञित् तस्मिन् । णिति=ण् इत् यस्य तस्मिन् च । परे । अजन्ताङ्गस्य=अच् अन्ते यस्य तादृशं यदङ्गं तस्य । वृद्धिः ।

**सखायौ**—सखिशब्दात् प्रथमाद्विवचने औविभक्तौ, सखि औ इति जाते, प्राप्तं पूर्वसवर्णदीर्घं बाधित्वा औ इत्येतस्य सम्बुद्धिभिन्नसर्वनामस्थानत्वेन सख्युः परत्वेन च तस्य 'सख्युरसम्बुद्धौ' इति णिद्वद्भावे, तत्परत्वेन सखिशब्देकारस्य वृद्धौ, आन्तरतम्येन ऐकारे, सखै औ इति जाते, आयादेशे—सखायौ इति । जसि, तस्य 'सख्युरसम्बुद्धौ' इति णिद्वद्भावेन तत्परे सखीकारस्य 'अचो ञ्णिति' इति वृद्धौ, आयादेशे, सखायस्, सस्य रुत्वविसर्गयोः—सखायः इति ।

**हे सखे**—सम्बोधने सौ, सोः 'एकवचनं सम्बुद्धिरि'ति सम्बुद्धिसंज्ञात्वेन तत्परत्वे अनङादेशाभावे, सखिस् इति स्थिते, ह्रस्वात्परत्वेन प्राप्तं हल्लोप-परत्वेन नित्यत्वेन च बाधित्वा 'ह्रस्वस्य गुणः' इति गुणे, सखेस् इति जाते, एङ्परत्वेन 'एङ्ह्रस्वात्सम्बुद्धेरि'ति हल्लोपे—हे सखे इति । औपरे णिद्वत्कार्येण वृद्धयादिकार्ये—सखायौ । जसि—सखायः ।

अमि, अमिपूर्वस्यापि बाधकत्वेन अमो णिद्वद्भावे, वृद्धौ, आयादेशे—सखायम् इति । औटि—सखायौ । शसि, शसः सर्वनामस्थानत्वाभावात् णिद्वद्भावा-

---

**सखायौ**—औ में 'सखि औ' होने पर प्राप्त पूर्वसवर्णदीर्घ को बाधकर औ का सम्बुद्धिभिन्न सर्वनामस्थान होने से 'सख्युरसम्बुद्धौ' से णिद्वद्भाव होने से उसको निमित्त मानकर सखि के इकार का 'अचो ञ्णिति' से वृद्धि होकर सखै औ, आय् आदेश होने पर सखायौ हो गया । जस् में जस् का णिद्वद्भाव होकर उसको निमित्त मानकर सखि के इकार की वृद्धि एवं आय् आदेश होने पर सखायः हुआ ।

**हे सखे**—सम्बोधन में सु के आने पर सखि सु, सु को 'एकवचनं सम्बुद्धिः' से सम्बुद्धिसंज्ञा होने पर अनङ् आदेश न होने से 'ह्रस्वस्य गुणः' से गुण होकर सखेस्, 'एङ्ह्रस्वात्सम्बुद्धेः' से हल् का लोप होकर 'हे सखे' हो गया । हे सखायौ । हे सखायः ।

अम् में पूर्वरूप के भी बाधक के रूप में अम् का णिद्वद्भाव एवं वृद्धि तथा आयादेश होने पर—सखायम् । औट् में णिद्वद्भाव, आयादेश होकर—

(१५९) ख्यत्यात्परस्य ६।१।११२॥ खितिशब्दखीतीशब्दाभ्यां कृतयणादेशाभ्यां परस्य ङसिङसोरत उत्स्यात्। सख्युः।

---

भावेन पूर्वसवर्णदीर्घे, सस्य नत्वे—सखीन् इति। टाविभक्तौ, घिसंज्ञाऽभावेन नाभावाभावात् यणि—सख्या इति। भ्यामि—सखिभ्याम्। भिसि—सखिभिः। ङयि घिसंज्ञाऽभावाद् गुणाभावेन यणि—सख्ये। सखिभ्याम्। सखिभ्यः।

**ख्यत्यात्परस्येति**। ख्यत्यात् परस्य द्विपदमिदं सूत्रम्। ङसिङसोश्च इति उत् इति चानुवर्तते। ख्यत्यात्—ख्यः=कृतयणादेशः खिः खीः वा च त्यः=कृतयणादेशः तिः तीः वा तयोः समाहारः। **खितिशब्देति**। कृतयणादेशाभ्याम्—कृतः=विहितः, यणादेशो ययोस्ताभ्यां तथाविधाभ्याम्। खितिशब्दखीतीशब्दाभ्याम्=खिश्च तिश्च यौ शब्दौ खीश्च तीश्च यौ शब्दौ ताभ्याम्। परस्य। ङसिङसोः। अतः=अकारस्य। उत्=उकारादेशः। स्यात्।

**सख्युः**—सखिशब्दात् ङसि, सखि अस् इति स्थिते, घित्वाभावाद् गुणाभावेन यणि, सख्यस् इति जाते, 'ख्यत्यात्परस्ये'ति अकारस्य उकारे, सस्य रुत्वविसर्गयोः—सख्युः इति। सखिभ्याम्। सखिभ्यः। ङसि घित्वाभावेन गुणाभावेन यणि, सख्यस् इति जाते, 'ख्यत्यात्परस्ये'ति अकारस्य उत्वे, सस्य रुत्वविसर्गयोः—सख्युः इति। ओसि यणि—सख्योः। आमि नुटि, 'नामी'ति दीर्घे—सखीनाम् इति।

---

सखायौ। शस् में शस् के सर्वनामस्थान न होने से णिद्वद्भाव न हो पाने से पूर्वसवर्णदीर्घ एवं शस् के स् का न् होकर—सखीन्। टा में यण् होकर—सख्या—घिसंज्ञा के अभाव में नाभाव नहीं होता। सखिभ्याम्। सखिभिः। ङे में यण् होकर—सख्ये—घिसंज्ञा न होने से गुणकार्य नहीं होता। सखिभ्याम्। सखिभ्यः।

**ख्यत्यात्परस्येति**। यणादेश किये गये खि ति शब्द एवं खी ती शब्दों से परे ङसि एवं ङस् के अकार का उत् हो।

**सख्युः**—ङसि में सखि अस् होने पर यणादेश होकर सख्यस् एवं 'ख्यत्यात्परस्य' से ख्य के अकार का उकार होने पर सख्युः हो गया। सखिभ्याम्। सखिभ्यः। ङस् में भी यण् होकर अकार का उत्व होने से—सख्युः। ओस् में यण् होने पर—सख्योः। आम् में नुट् एवं दीर्घ होने पर—सखीनाम्।

**(१६०) औत् ७।३।११८ ॥ इदुद्भ्यां परस्य ङेरौत्। सख्यौ। शेषं हरिवत्।**

**(१६१) पतिः समास एव १।४।८ ॥ पतिशब्दः समासे एव घिसंज्ञः। पत्या। पत्ये। पत्युः २। पत्यौ। शेषं हरिवत्। समासे तु भूपतये।**

---

**औत् इति।** इदुद्भ्यामित्यनुवर्तते ङेः इति च। **इदुद्भ्यामिति।** इदुद्भ्याम्=ह्रस्वेकारोकाराभ्याम्। परस्य। ङेः=ङि इत्येतस्य। औत्।

**सख्यौ**—ङौ, सखि इ इति जाते, यणपवादेन प्राप्तं सवर्णदीर्घं बाधित्वा 'औत्' इत्यनेन इकारस्य औकारे, यणि–सख्यौ इति। सुपि मूर्धन्यादेशे–सखिषु।

**शेषमिति।** शेषं=सर्वनामस्थानटाङेङसिङस्ङिविभक्तिभ्योऽन्यत्र। हरिवत्=हरिशब्दस्येव रूपाणीति।

**पतिः**—पतिशब्दात्सौ, अनुबन्धलोपे, सस्य रुत्वविसर्गयोः, पतिः इति। 'औ' विभक्तौ पूर्वसवर्णदीर्घे—पती। जसि पूर्वसवर्णदीर्घबाधकत्वेन 'जसि चे'ति गुणे—पतयः। अमि पूर्वरूपे—पतिम्। औटि पूर्वसवर्णदीर्घे—पती। शसि पूर्वसवर्णदीर्घे, सस्य नत्वे—पतीन्।

**पतिः समास एव इति।** त्रिपदमिदं सूत्रम्। घि इत्यनुवर्तते। सर्वत्र प्राप्ते नियमार्थमिदम्। **पतिशब्द इति।** पतिशब्दः। समासे=समस्तरूपे। एव=हि। घिसंज्ञः नासमस्त इति।

**पत्या**—टापरे समासाभावेन घित्वाभावान्नाभावाभावे यणि—पत्या इति। पतिभ्याम्। पतिभिः। ङयि घित्वाभावेन गुणाभावे यणि—पत्ये। पतिभ्यः। ङसि घित्वाभावेन गुणाभावे यणि, पत्यस् इति जाते, 'ख्यत्यात्परस्ये'ति

---

**औदिति।** इकार एवं उकार से परे ङि का औत् हो।

**सख्यौ**—ङि में 'सखि इ' होने पर सवर्णदीर्घ को बाधकर इ के स्थान में 'औत्' से औकार होने से सखि औ, यण् होने से सख्यौ हो गया। ओस् में यण् होने से—सख्योः। सुप् में मूर्धन्यादेश होने से—सखिषु।

शेष में अर्थात् सर्वनामस्थान टा, ङे, ङसि, ङस् एवं ङि को छोड़कर अन्यत्र हरि शब्द के जैसे रूप होते हैं।

**पतिः समास एवेति।** पति शब्द समास होने पर ही घिसंज्ञक होता है।

**पति** शब्द से सु में—पतिः। क्रमशः—पती पतयः। पतिम् पती पतीन्। टा में घिसंज्ञा के अभाव में यण् होकर—पत्या पतिभ्याम् पतिभिः। ङे में यण् होकर—पत्ये। ङसि में यण् एवं अकार का उत् होने से—पत्युः। ङस् में

(१६२) बहुगणवतुडति सङ्ख्या १।१।२३॥ एते सङ्ख्यासंज्ञाः स्युः।

---

अकारस्य उत्त्व—पत्युः इति। ङसि यणि, उत्वे—पत्युः। ओसि यणि—पत्योः। आमि नुटि, 'नामी'ति दीर्घे—पतीनाम्। ङौ, ङेः 'औत्' इति औत्वे, यणि—पत्यौ। ओसि—पत्योः। सुपि मूर्धन्यादेशे—पतिषु। सम्बोधने सौ, 'ह्रस्वस्य गुणः' इति गुणे, एङन्तात्परत्वेन स्लोपे—हे पते। हे पती। हे पतयः।

**शेषमिति।** शेषं=घिसंज्ञाक्षेत्रवर्जम्। हरिवत्। समासे=समासविषये तु 'पतिः समास एवे'ति घित्वेन सर्वत्र हरिवत्। यथा—भुवः पतिः भूपतिः षष्ठी-तत्पुरुषसमासः। तस्य च 'कृत्तद्धितसमासाश्चे'ति प्रातिपदिकसंज्ञायां स्वाद्युत्पत्तौ—भूपतिः भूपती भूपतयः। भूपतिम् भूपती भूपतीन्। टापरे 'पतिः समास एवे'ति घित्वेन नाभावे—भूपतिना। ङयौ गुणे, अयादेशे—भूपतये। ङसि गुणे, पूर्व-रूपे—भूपतेः। ङसि गुणे, पूर्वरूपे—भूपतेः। भूपत्योः। भूपतीनाम्। ङयि औत्वे, अकारान्तादेशे—भूपतौ। भूपत्योः। भूपतिषु। हे भूपते।

**बहुगणवतुडति सङ्ख्या इति।** द्विपदमिदं सूत्रम्। बहुश्च गणश्च वतुश्च डतिश्च तेषां समाहारः। बहुगणौ शब्दौ वतुडती प्रत्ययौ तेन तदन्तौ वत्वन्तः डत्यन्तश्च। **एते इति।** एते बहुगणशब्दौ वतुडतिप्रत्ययान्तशब्दाश्च। सङ्ख्या-संज्ञाः=सङ्ख्या संज्ञा येषान्ते तादृशाः। स्युरिति। सङ्ख्यायतेऽनेनेति सङ्ख्या। तेन बहुगणशब्दौ त्रित्वादिपरार्धपर्यन्तसङ्ख्यावाचकौ न तु वैपुल्यसङ्घवाचिनौ। वतुडती च सङ्ख्यापरिमाणार्थकावेव।

---

पत्युः। पत्योः। पतीनाम्। ङि में औत्, औ एव यण् होने पर—पत्यौ पत्योः पतिषु। हे पते हे पती हे पतयः।

घिसंज्ञाक्षेत्र को छोड़कर अन्यत्र पति शब्द के हरिवत् रूप होते हैं। समास में तो घिसंज्ञा होने से सर्वत्र हरिवत् ही रूप चलते हैं। जैसे—भूपतिः भूपती भूपतयः। हे भूपते। भूपतिम् भूपती भूपतीन्। टा में नाभाव—भूपतिना। ङे में—भूपतये। ङसि में—भूपतेः। ङस् में—भूपतेः। ओस् में—भूपत्योः। आम् में—भूपतीनाम्। ङि मे—भूपतौ। ओस् में—भूपत्योः। सुप् में—भूपतिषु।

**बहुगणवतुडति सङ्ख्या इति।** बहु एवं गण शब्द, वतु एवं डति प्रत्ययान्त शब्द सङ्ख्यासंज्ञक होते हैं।

**ष्णान्ताः षट् इति।** ष् एवं न् अन्त में होने वाले शब्द षट्संज्ञक होते हैं।

(१६३) डति च १।१।२५ ॥ डत्यन्ता सङ्ख्या षट्संज्ञा स्यात् ।

(१६४) षड्भ्यो लुक् ७।१।२२॥ षड्भ्यः परयोः जश्शसोर्लुक् स्यात् ।

(१६५) प्रत्ययस्य लुक्श्लुलुपः १।१।६१ ॥ लुक्श्लुलुप्शब्दैः कृतं प्रत्ययादर्शनं क्रमात् तत्तत्संज्ञं स्यात् । प्रत्ययलक्षणेन जसि चेति गुणे प्राप्ते—

(१६६) न लुमताऽङ्गस्य १।१।६३ ॥ लुमता शब्देन लुप्ते तन्नि-

---

डति चेति । द्विपदमिदं सूत्रम् । षट् इत्यनुवर्तते । डत्यन्तेति । डत्यन्ता= डतिप्रत्ययान्ता । सङ्ख्या । षट्संज्ञा=षट् संज्ञा यस्याः सा । स्यात् ।

षड्भ्यो लुक् इति । द्विपदमिदम् । जश्शसोरित्यनुवर्तते । षड्भ्य इति । षड्भ्यः=षट्संज्ञकेभ्यः 'ष्णान्ताः षट्' 'डति च' इत्युक्तेभ्यः । परयोः=परवर्तिनोः । जश्शसोः । लुक् ।

प्रत्ययस्य लुक्श्लुलुप इति । द्विपदमिदं सूत्रम् । अदर्शनमित्यनुवर्तते । लुगिति । लुक्श्लुलुप्शब्दैः=एतैः शब्दैः । कृतं=विहितम् । प्रत्ययादर्शनं= प्रत्ययलोपः 'षड्भ्यो लुक्' 'जुहोत्यादिभ्यः श्लुः' 'जनपदे लुप्' इति निदर्शनानि । क्रमात्=अनुक्रमेण । तत्तत्संज्ञं=लुका कृतमदर्शनं लुक्संज्ञं श्लुना कृतं श्लुसंज्ञं लुपा कृतं लुप्संज्ञं च । स्यात् ।

प्रत्ययलोपे प्रत्ययलक्षणमिति । प्रत्यये लुप्तेऽपि तदाश्रितं कार्यं स्यादिति । इति 'जसि चे'ति गुणे प्राप्ते=जसो लुकि अपि तल्लक्षणेनेति ।

न लुमताऽङ्गस्येति । न लुमता अङ्गस्य त्रिपदमिदं सूत्रम् । लुमता=लु इत्येकदेशोऽस्यास्तीति लुमान्, तेन लुक् श्लु लुप् एते हि लुमन्तः । 'प्रत्ययलोपे प्रत्ययलक्षणमि'त्यनुवर्तते । तेन लुमता प्रत्ययलोपे प्रत्ययलक्षणम् अङ्गस्य कार्यं

---

डति चेति । डति प्रत्यय अन्त में होने वाला सङ्ख्या शब्द षट्संज्ञक होता है ।

षड्भ्यो लुक् इति । षट्संज्ञक शब्दों से जस् एवं शस् का लुक् हो ।

प्रत्ययस्य लुक्श्लुलुप इति । लुक् श्लु लुप् शब्दों से किया गया प्रत्यय का अदर्शन क्रम से तत्-तत् संज्ञा वाला हो ।

प्रत्ययलोपे प्रत्ययलक्षणमिति । प्रत्यय का लोप होने पर भी उसमें आश्रित कार्य हो ।

न लुमताऽङ्गस्येति । 'लु' से युक्त शब्द से प्रत्यय लुप्त होने पर उस निमित्त का अङ्गकार्य न हो ।

**मित्तकमङ्गकार्यं न स्यात्। कति २। कतिभिः। कतिभ्यः २। कतीनाम्। कतिषु। त्रिशब्दो नित्यं बहुवचनान्तः। त्रयः। त्रीन्। त्रिभिः। त्रिभ्यः २॥**

---

नेति। लुमतेति। लुमता = लु इत्येकदेशवता। शब्देन = लुका श्लुना लुपा वा। लुप्ते = प्रत्ययादर्शने कृते। तन्निमित्तं=लुप्तप्रत्ययहेतुकम्। अङ्गकार्यं = गुणादि। न। स्यात्।

कति—किमः सङ्ख्यापरिमाणेऽर्थे डतिप्रत्यये, डित्त्वसामर्थ्यात् टिलोपेन निष्पन्नः कतिशब्दः नित्यं बहुवचनान्तः त्रिषु सरूपश्च। तस्य कृत्तद्धितसूत्रेण प्रातिपदिकसंज्ञायां, प्रथमाविभक्तौ जसि, कति अस् इति जाते, कतिशब्दस्य डत्यन्तेन 'बहुगणवतुडति सङ्ख्ये'ति सङ्ख्यासंज्ञायाम्, 'डति चे'ति षट्संज्ञायाञ्च 'षड्भ्यो लुक्' इति जसो लुकि, कति इति स्थिते, 'प्रत्ययलोपे प्रत्ययलक्षणमि'ति सूत्रेण लुप्तं प्रत्ययमाश्रित्य कतीकारस्य 'जसि चे'ति गुणे प्राप्ते 'न लुमताऽङ्गस्ये'ति लुप्तप्रत्ययनिमित्तकाङ्गकार्यनिषेधेन गुणाभावे—कति इति।

शसि च तस्य 'षड्भ्यो लुगि'ति लुकि, 'प्रत्ययलोपे प्रत्ययलक्षणमि'ति लुप्तं प्रत्ययमाश्रित्य पूर्वसवर्णदीर्घे प्राप्ते 'न लुमताङ्गस्ये'ति तन्निषेधात् कति इति। भिसि—कतिभिः। भ्यसि—कतिभ्यः २। आमि तु नुटि 'नामी'ति दीर्घे—कतीनाम् इति। सुपि सस्य मूर्धन्यादेशे—कतिषु इति।

---

कति—किं शब्द से डति प्रत्यय होकर बना कति शब्द नित्य बहुवचनान्त है। उसको 'कृत्तद्धित०' सूत्र से प्रातिपदिक संज्ञा होने पर प्रथमा विभक्ति में जस् आने पर कति जस् हो गया, तब कति शब्द का डति-प्रत्ययान्त होने से 'बहुगणवतुडति संख्या' से संख्यासंज्ञा होकर 'डति च' से षट्संज्ञा होने पर 'षड्भ्यो लुक्' से जस् का लुक् हो गया। तब 'प्रत्ययलोपे प्रत्ययलक्षणम्' से प्रत्यय के लक्षण को लेकर प्रत्यय का लोप होने पर भी 'जसि च' से गुण की प्राप्ति होने पर 'न लुमताऽङ्गस्य' से लुक् से अदर्शन होने के कारण प्रत्ययलक्षण को निषेध होने से गुण न हो पाने से कति हो गया।

शस् में भी 'कति शस्' होने पर षट्संज्ञा एवं शस् का लुक्, प्रत्ययलक्षण से पूर्वसवर्णदीर्घ के प्राप्त होने पर 'न लुमताऽङ्गस्य' से उसका निषेध होने से कति हो गया।

भिस् में—कतिभिः। भ्यस् में—कतिभ्यः २। आम् में नुट् एवं दीर्घ होने पर—कतीनाम्। सुप् में मूर्धन्यादेश से—कतिषु।

(१६७) त्रेस्त्रयः ७।१।५३।। त्रिशब्दस्य त्रयादेशः स्यादामि । त्रयाणाम् ।
त्रिषु ।

( १६८ ) त्यदादीनामः ७।२।१०२ ।। एषामकारोऽन्तादेशो विभक्तौ। द्विपर्यन्तानामेवेष्टिः ( वा० ) । द्वौ । द्वौ । द्वाभ्यां ३ । द्वयोः २ । पपौः । पप्यौ ।

---

त्रिशब्दो नित्यं बहुवचनान्तः । त्रिशब्दात्प्रथमाविभक्तौ जसि, 'जसि चे'ति गुणेऽयादेशे रुत्वविसर्गयोश्च—त्रयः इति । शसि तु पूर्वसवर्णदीर्घेण शसः सस्य नत्वे—त्रीन् इति । भिसि—त्रिभिः । भ्यसि—त्रिभ्यः ।

**त्रेस्त्रय इति ।** त्रेः त्रयः द्विपदमिदं सूत्रम् । त्रेरिति षठ्यन्तम् । आमि इत्यनुवर्तते । **त्रिशब्दस्येति** । त्रिशब्दस्य । स्थाने । त्रयादेशः=त्रय इत्यादेशः । आमि परे इति ।

**त्रयाणाम्**—त्रि आम् इति स्थिते, त्रिशब्दस्य 'त्रेस्त्रयः' इति त्रयादेशे, तस्यानेकाल्त्वेन सर्वादेशे, त्रय आम् इति जाते, तस्य स्थानिवद्भावेन ततः 'ह्रस्वनद्यापो नुट्' इति नुटि 'नामी'ति दीर्घे णत्वे च—त्रयाणाम् इति । सुपि मूर्धन्यादेशे—त्रिषु ।

द्विशब्दो नित्यं द्विवचनान्तः । द्विशब्दात् प्रथमा द्विवचने औविभक्तौ, यणो बाधकत्वेन प्राप्तस्य पूर्वसवर्णदीर्घस्य बाधकत्वेन—

**त्यदादीनाम इति ।** त्यदादीनाम् अः द्विपदमिदं सूत्रम् । त्यद् आदिर्येषान्ते त्यदादयः त्यदित्यारभ्य द्विपर्यन्ताः तेषाम् । **एषामिति** । एषा=त्यदादीनाम् ।

---

युष्मद्, अस्मद् एवं षट्संज्ञक शब्दों का तीनों ही लिङ्गों में समान रूप होते हैं ।

त्रिशब्द नित्य बहुवचनान्त है । जस् में 'जसि च' से गुण एवं अयादेश होने पर त्रयः हो गया । शस् में पूर्वसवर्णदीर्घ होकर स् का न् होने से—त्रीन् । भिस् में—त्रिभिः । भ्यस् में—त्रिभ्यः २ । आम् में—

**त्रेस्त्रय इति ।** त्रिशब्द के स्थान में त्रय आदेश हो आम् परे रहने से ।

'त्रि आम्' में त्रि के स्थान में त्रय आदेश होने पर उसके अनेकाल् होने से सर्वादेश होकर त्रय आम्, आम् का नुडागम एवं त्रय के अकार का दीर्घ तथा न का णत्व होने से त्रयाणाम् हो गया । सुप् में मूर्धन्यादेश से—त्रिषु ।

द्विशब्द नित्य द्विवचनान्त है ।

**त्यदादीनाम इति ।** त्यदादि शब्दों ( त्यद् से लेकर द्वि तक ) का अकार

पप्यः । हे पपीः । पपीम् । पप्यौ । पपीन् । पप्या । पपीभ्याम् । पपीभिः । पप्ये । पपीभ्याम् । पपीभ्यः । पप्यः । पपीभ्याम् । पपीभ्यः । पप्यः । पप्योः । पप्याम् । पपी । पप्योः । पपीषु । एवं वातप्रम्यादयः । प्रधीः ।

---

अकारः अन्तादेशः स्यात् विभक्तौ परे । द्विपर्यन्तानां=त्यदित्यारभ्य द्विशब्द-पर्यन्ताम् । एव । इष्टिः ग्रहणम् अत्वप्रसङ्गे इति । निषेधोऽयं भवच्छब्दस्यैव कृते, युष्मदस्मदोरात्वयत्वलोपैर्बाधात् किमः कादेशविधानाच्च । तेषां त्यदादिषु समावेशेऽपि न क्षतिः तत्र भवच्छब्दस्य समावेशे तु तस्य सौ, भवत् स्, अकारान्तादेशे—भव अ स्, पररूपे—भवस्, नुमि—भवन्स्, उपधादीर्घे—भवान्स्, सस्य हल्ङ्यादिलोपे, नस्य प्रातिपदिकान्तलोपे—भवा इति रूपं स्यात्; इष्टञ्च भवानिति एवं भवानौ भवान् इत्यादिरूपाणि च स्युरिति कथितं द्विपर्यन्तानामेव ग्रहणमिति ।

इति सूत्रेण 'अलोऽन्त्यस्ये'ति परिभाषया इकारस्य स्थानेन अकारे, द्व औ इति जाते, वृद्धौ—द्वौ इति । औटि अकारान्तादेशे, वृद्धौ—द्वौ इति । भ्यामि अकारान्तादेशे 'सुपि चे'ति दीर्घे—द्वाभ्याम् । द्वाभ्याम् । द्वाभ्याम् । ओसि अकारान्तादेशे, अकारस्य 'ओसि चे'ति एत्वेऽयादेशे—द्वयोः २ । त्यदादेः सम्बोधनं नास्तीत्युत्सर्गः ।

अथ दीर्घेकारान्ता वक्ष्यन्ते । तत्र पपीशब्दात् 'कृत्तद्धिते'ति प्रातिपदिकत्वे सौ, अनुबन्धलोपे, सस्य रुत्वविसर्गयोः—पपीः इति । औ विभक्तौ, पपी औ इति जाते, 'दीर्घाज्जसि चे'ति पूर्वसवर्णनिषेधेन यणि—पप्यौ इति । जसि पूर्वसवर्ण-निषेधेन यणि—पप्यः । सम्बोधने सौ, एङ्ह्रस्वपरत्वाभावेन हल्लोपाभावे, सस्य

---

अन्तादेश हो विभक्ति परे रहने से । द्वि शब्द तक का ही यहाँ ग्रहण किया गया है ।

द्वि शब्द से औ के आने पर द्वि औ, 'त्यदादीनामः' से इकार के स्थान में अकार होने से द्व औ, वृद्धि होने से द्वौ हो गया । द्वौ । भ्याम् में अकार अन्तादेश तथा 'सुपि च' से दीर्घ होने पर—द्वाभ्याम् । द्वाभ्याम् । द्वाभ्याम् । ओस् में अकार अन्तादेश होने पर द्व ओस्, 'ओसि च' से अ का एत्व होने पर द्वे ओस् तथा अयादेश होने पर—द्वयोः । द्वयोः ।

**पपीः**—पपी से सु, स् का रुत्व एवं विसर्ग से पपीः हो गया । औ में 'दीर्घाज्जसि च' से पूर्वसवर्णदीर्घ के निषेध होने से यण् होकर—पप्यौ । जस्

( १६९ ) अचि श्नुधातुभ्रुवां य्वोरियङुवङौ ६।४।७७ ।। श्नुप्रत्ययान्तस्य इवर्णोवर्णान्तस्य धातोर्भ्रू इत्यस्य चाङ्गस्य इयङुवङौ स्तः अजादौ प्रत्यये परे । इति प्राप्ते—

---

रुत्वविसर्गयोः—हे पपीः । अमि पूर्वरूपे—पपीम् । औटि पूर्वसवर्णदीर्घनिषेधेन यणि—पप्यौ । शसि पूर्वसवर्णदीर्घे, सस्य नत्वे—पपीन् । टापरे यणि—पप्या । भ्यामि—पपीभ्याम् । भिसि—पपीभिः । ङसि यणि— पप्ये । पपीभ्यः । ङसौ यणि—पप्यः । ङसि यणि—पप्यः । ओसि —पप्योः । आमि ह्रस्वनद्याबन्ताभावेन नुडभावे यणि—पप्याम् । ङौ सवर्णदीर्घे —पपी । ओसि यणि—पप्योः । सुपि मूर्धन्यादेशे—पपीषु ।

एवं वातप्रमीप्रभृतिशब्दाः । वातप्रमीः-म्यौ-म्यः । हे वातप्रमीः । वातप्रमीम्-म्यौ-मीन्-म्या-मीभ्यां-भिः-म्ये-मीभ्यां-भ्यः-म्यः-मीभ्यां-भ्यः-म्यः-म्योः-म्याम्-मी-म्योः-मीषु । एवं ययीः यय्यौ इत्यादि ।

**अचि श्नुधातुभ्रुवां य्वोरियङुवङौ इति ।** अचि श्नुधातुभ्रुवां य्वोः इयङुवङौ चतुष्पदमिदं सूत्रम् । य्वोरिति षष्ठ्यन्तं पदं धातोर्विशेषणं तदन्तविधिः । श्नुधातुभ्रुवां = श्नुश्च धातुश्च भ्रूश्च तेषाम् । य्वोः = इश्च उश्च यू तयोः ।

---

में भी यण् से —पप्यः । सम्बोधन में —हे पपीः । अम् में पूर्वरूप से—पपीम् । औट् में यण् से—पप्यौ । शस् में पूर्वसवर्णदीर्घ एवं स् के नत्व से—पपीन् । टा में यण् से—पप्या । इसी तरह ङे में—पप्ये । ङसि में—पप्यः । ङस् में—पप्यः । ओस् में—पप्योः । आम् में नुट् के न होने से यण् से—पप्याम् । ङि में सवर्णदीर्घ से—पपी । हलादि विभक्ति में यथावत्—पपीभ्याम् इत्यादि । सुप् में मूर्धन्यादेश से—पपीषु ।

इसी तरह वातप्रमी आदि शब्दों के रूप भी होते हैं । प्रातप्रमीः-म्यौ-म्यः-म्यम्-म्यौ-मीन्-म्या-म्ये-म्यः-म्यः-म्योः-म्याम्-मी इत्यादि । इसी तरह ययी ।

**प्रधीः**—प्रधी शब्द को 'कृत्तद्धित०' सूत्र से प्रातिपदिक संज्ञा होने पर सु के आ जाने एवं अनुबन्धलोप से प्रधीस् एवं धी का ङ्यन्त न होने के कारण 'हल्ङ्याब्भ्यः०' सूत्र से स्‌लोप न होने से स् का रुत्व एवं विसर्ग से—प्रधीः हो गया ।

**अचि श्नुधातुभ्रुवां य्वोरियङुवङौ इति ।** श्नुप्रत्ययान्त का इ वर्ण तथा उ

( १७० ) एरनेकाचोऽसंयोगपूर्वस्य ६।४।८२ ॥ धात्ववयवसंयोगपूर्वो न भवति य इवर्णस्तदन्तो यो धातुस्तदन्तस्यानेकाचोऽङ्गस्य यणजादौ प्रत्यये । अनेकाच्त्वं गतिकारकयोगेनाऽपि, तेन गतिकारकेतरपूर्वपदस्य तु न यण् । प्रध्यौ प्रध्यः । हे प्रधीः । प्रध्यम् । प्रध्यौ । प्रध्यः । प्रध्या । प्रध्ये । प्रध्यः । प्रध्यः । प्रध्योः । प्रध्याम् । प्रध्यि । प्रध्योः । शेषं पपीवत । एवं ग्रामणीः । ङौ तु—

---

श्नुप्रत्ययान्तस्येति । श्नुप्रत्ययान्तस्य —श्नुप्रत्ययः='स्वादिभ्यः श्नुरि'ति विहितो यः प्रत्ययः, सः अन्ते=अवसाने, यस्य इवर्णोवर्णान्तस्य=इवर्णः उवर्णो वा अन्ते यस्य तादृशस्य । धातोः=क्रियावाचकशब्दस्य । भ्रू इत्येतस्य च । अङ्गस्य । इयङुवङौ=इयङ् च उवङ् च तौ इकारस्य इयङ् उकारस्य उवङ् इत्येतौ स्तः । अजादौ । प्रत्यये परे इति ।

इति यणो बाधकत्वेन इयङि प्राप्ते—

**एरनेकाचोऽसंयोगपूर्वस्येति ।** एः अनेकाचः असंयोगपूर्वस्य त्रिपदमिदं सूत्रम् । एरिति षष्ठ्यन्तमिवर्णस्येति । धातोरित्यनुवर्तते । तदन्तविधित्वात् इकारान्तधातोरिति । अनेकाचः=अनेकः अच् यस्य तस्य । अचि इत्यनुवर्तते । असंयोगपूर्वस्य—संयोगः=धात्ववयवसंयोगः, पूर्वो यस्मात्सः संयोगपूर्वस्तद्भिन्नोऽसंयोगपूर्वस्तस्य । **धात्ववयवेति ।** धात्ववयवसंयोगपूर्वः धातोरवयवश्चासौ संयोगः पूर्वो यस्मात् तादृशः । न भवति य इवर्णः तदन्तः=तादृशेकारान्तः यः धातुः । तदन्तस्य=सः अन्ते यस्य तादृशस्य । अनेकाचः=अनेकः अच् यस्य तस्य । अङ्गस्य । यण् । स्यात् । अजादौ=अच् आदौ यस्य तादृशे । प्रत्यये । परे=परतः स्थिते ।

**प्रधीः**—प्रधी इत्येतस्य 'कृत्तद्धित०'सूत्रेण प्रातिपदिकसंज्ञायां सौ, अनुबन्धलोपे, प्रधीस् इति जाते अङ्यन्तत्वात्सुलोपाभावेन सस्य रुत्वविसर्गयोः—प्रधीः

---

वर्ण अन्त में होने वाले धातु का एवं भ्रू इसके अङ्ग का इयङ् तथा उवङ् हो अजादि प्रत्यय परे रहने से ।

इससे इयङ् के प्राप्त होने पर—

**एरनेकाचोऽसंयोगपूर्वस्येति ।** धातु का अवयव वाला संयोग पूर्व वाला न हो, ऐसा जो इ वर्ण है, वह है अन्त में जिसका वैसा जो धातु है तदन्त अनेक अच् वाले अङ्ग का यण् हो अजादि प्रत्यय परे होने से ।

**प्रध्यौ**—प्रधी से औ के आने पर पूर्वसवर्णदीर्घ का 'नादिचि' से निषेध

( १७१ ) ङेराम्नद्याम्नीभ्यः ७।३।११६ ।। **नद्यन्तादाबन्तान्नीशब्दाच्च ङेराम् स्यात् । ग्रामण्याम् ।**

---

इति । औपरे प्रधी औ इति जाते, यणं प्रबाध्य प्रवृत्तस्य पूर्वसवर्णदीर्घस्य 'दीर्घाज्जसि चे'ति निषेधेन पुनः प्रवृत्तं यणं प्रबाध्य धी इत्येतस्य धातुसम्बन्धित्वेन 'अचि श्नुधातुभ्रुवां य्वोरियङुवङौ' इति इयङि प्राप्ते, तस्य बाधकत्वेन 'एरनेकाचोऽसंयोगपूर्वस्य' इति धीगतेकारस्य यणि यकारे—प्रध्यौ इति । जसि, प्रधी अस् इति जाते, यणं प्रबाध्य प्रवृत्तस्य पूर्वसवर्णदीर्घस्य 'नादिचि' इति निषेधेन पुनः प्रवृत्तस्य यणो बाधकत्वेन 'अचि श्नुधातुभ्रुवामि'ति प्राप्तस्य इयङः बाधकत्वेन 'एरनेकाचोऽसंयोगपूर्वस्ये'ति यणि—प्रध्यः इति । अमि पूर्वरूपस्यापि बाधकत्वेन प्रवृत्तस्य 'अचि श्नुधातुभ्रुवामि'त्येतत्साधितस्य इयङो बाधकत्वेन 'एरनेकाचोऽसंयोगपूर्वस्ये'ति यणि—प्रध्यम् इति । औटि इयङोऽपि बाधकत्वेन यणि—**प्रध्यौ** । शसि यणि—प्रध्यः । टापरे यणि—प्रध्या । एवं अजादौ सर्वत्र यणि—प्रध्ये । प्रध्यः । प्रध्यः । प्रध्योः । प्रध्याम् । प्रध्यि । प्रध्योः । शेषं पपीवत्=पपीशब्दस्येव रूपाणि । अमि शसि ङौ पपीशब्दस्य पूर्वरूपं पूर्वसवर्णदीर्घः सवर्णदीर्घश्च प्रधीशब्दस्य तु सर्वत्र यण् । शेषं समानम् ।

एवं=प्रधीवत् ग्रामणीशब्दोऽपि । ग्रामणीशब्दः ङिवर्जमन्यत्र प्रधीवत् । ग्रामणीः । ग्रामण्यौ–ण्यः–ण्यम्–ण्यौ–ण्यः–ण्या–ण्ये–ण्यः–ण्यः–ण्योः–ण्याम् ।

**ङेराम्नद्याम्नीभ्य इति** । ङेः आम् नद्याम्नीभ्यः त्रिपदमिदं सूत्रम् । नद्याम्नीभ्यः=नदीश्च आप् च नीश्च तेभ्यः । ङेः इति षष्ठ्यन्तम् । **नद्यन्तादिति ।**

---

होने से पुनः प्रवृत्त यण् के बाधक के रूप में 'अचि श्नुधातुभ्रुवा०' से इयङ् की प्राप्ति होने पर उसको बाधकर 'एरनेकाचोऽसंयोगपूर्वस्य' से ई के स्थान में यण् होकर अन्तरतम य् होने से प्रध्यौ हो गया । इसी तरह जस् में—प्रध्यः । अम् में भी यण् ही होकर—प्रध्यम् । शस् में भी यण् होकर—प्रध्यः । टा आदि में—प्रध्या । प्रध्ये । प्रध्यः । प्रध्यः प्रध्योः प्रध्याम् । प्रध्यि प्रध्योः इत्यादि । सर्वत्र अजादि में यण् । अम्, शस् एवं ङि को छोड़कर अन्यत्र प्रधी के रूप पपी की तरह होते हैं ।

इसी तरह ग्रामणी शब्द के रूप ङि को छोडकर अन्यत्र विभक्तियों में प्रधी की तरह होते हैं । ङि में—

**ङेराम्नद्याम्नीभ्य इति** । नदी संज्ञा वाले, आबन्त वाले एवं नी शब्द से परे ङि के स्थान में आम् हो ।

**( १७२ ) गतिश्च १।४।६० ॥ प्रादयः क्रियायोगे गतिसंज्ञाः स्युः । गति-कारकेतरपूर्वपदस्य यण् नेष्यते ( वा० ) । शुद्धधियौ ।**

---

नद्यन्तात् = नदीसंज्ञकान्तात् । आबन्तात् = आप् अन्ते यस्य तस्मात् । नीशब्दात् । च । ङेः = ङि इत्येतस्य स्थाने । आम् । स्यात् ।

**ग्रामण्याम्**—ग्रामणीशब्दात् ङौ, सवर्णदीर्घं बाधित्वा 'ङेराम्नद्याम्नीभ्यः' इति ङेः आमि, यणि—ग्रामण्याम् इति ।

**गतिश्चेति** । गतिः च द्विपदमिदं सूत्रम् । प्रादयः क्रियायोगे इत्यनुवर्तते । **प्रादय इति** । प्रादयः = प्रादिनिपाताः । क्रियायोगे—क्रियायाः = पाकादेः, योगे सङ्गतौ । गतिसंज्ञाः = गति संज्ञा येषान्ते तादृशाः । स्युः । **गतीति** । गति-कारकेतरपूर्वपदस्य—गतिः = गतिसंज्ञकशब्दाः, कारकाणि = कर्मादीनि, तयोरितरत् = अन्यदेव, पूर्वपदं = प्राग्वर्तिपदं यस्य तस्य । यण् = एरनेकाच इति तदुपस्थित्या अनेकाच्त्वेन यण् । न । इष्यते ।

**शुद्धधीः**—शुद्धा धीर्यस्येति व्युत्पन्नः शुद्धधीशब्दः । तस्य समासत्वेन प्रातिपदिकसंज्ञायां सौ, अङ्यन्तत्वेन सोर्लोपाभावे, सस्य रुत्वविसर्गयोः—शुद्धधीः इति । औविभक्तौ इयङो बाधकत्वेन अनेकाच्त्वमाश्रित्य 'एरनेकाच०' इति प्राप्तस्य यणः शुद्धपदस्य गतिकारकभिन्नत्वात् 'गतिकारकेतरपूर्वपदस्य यण्

---

इससे आम् होने एवं यण् होने पर ग्रामण्याम् हो गया । ग्रामणी में भी सर्वत्र यण् 'एरनेकाच०' सूत्र से ही होता है इयङ् को बाधकर । ग्रामणीः ग्रामण्यौ ग्रामण्यः । ग्रामण्यम् ग्रामण्यौ ग्रामण्यः । ग्रामण्या । ग्रामण्ये । ग्रामण्यः । ग्रामण्यः ग्रामण्योः ग्रामण्याम् । ग्रामण्याम् ग्रामण्योः ।

**गतिश्चेति** । प्रादि जो हैं क्रिया के योग में गतिसंज्ञक भी होते हैं । गति एवं कारक से भिन्न पूर्व पद वाले का यण् नहीं होता ( क्योंकि वैसे पद को लेकर अनेकाच् नहीं माना जाता ) ।

**शुद्धधियौ**—शुद्धधी शब्द में शुद्ध शब्द का गति एवं कारक से भिन्न होने से उसके साथ धी का अनेकाच्त्व नहीं बन सकता, अतः यण् न होने से अजादि में सर्वत्र इयङ् होता है । जैसे—शुद्धधीः शुद्धधियौ-यः-यं-यौ-यः-या-ये-यः-यः-योः-यां-यि-योः इत्यादि । ( किन्तु 'शुद्धं ब्रह्म ध्यायती'ति ऐसे विग्रह से निष्पन्न शुद्धधी शब्द का तो शुद्ध पद के कारक होने से यण् ही होता है, सर्वत्र अजादि में और प्रधी की तरह रूप चलते हैं । )

**( १७३ ) न भूसुधियोः ६।४।८५ ॥ एतयोर्यण् न स्यादचि सुपि। सुधियौ । सुधिय इत्यादि । सुखमिच्छतीति सुखीः । सुख्युः २ । सुतमिच्छतीति सुतीः । सुत्युः २ । शेषं प्रधीवत् । शम्भुर्हरिवत् । एवं भान्वादयः ।**

---

नेष्यते' इति निषेधात् इयङि—शुद्धधियौ इति । एवं जसादौ सर्वत्र अजादौ यण्-निषेधेन अमि शसि च परत्वादियङेव । तेन शुद्धधियः । शुद्धधियं–यौ–यः–या–ये–यः–यः–योः–याम्–यि–योः इत्यादिरूपाणि ।

**न भूसुधियोरिति ।** द्विपदमिदं सूत्रम् । यण् इत्यनुवर्तते । भूसुधियोः= भूश्च सुधीश्च तयोः । **एतयोरिति ।** एतयोः=भू-सुधी इत्येतयोः । यण्=एरनेकाच इति यण् न । अचि=अजादौ । सुपि =सुब्विभक्तौ ।

**सुधियौ**—सुधीशब्दात् औपरे इयङो बाधकत्वेम 'एरनेकाच०' इति यणि प्राप्ते 'न भूसुधियोरि'ति तन्निषेधेन इयङि—सुधियौ इति । एवं सर्वत्र यण्-निषेधेन परत्वादियङेव । तेन सुधियः–यं–यौ–यः–या–ये–यः–यः–योः–यां–यि–योः इत्यादिरूपाणि अजादौ । यणिनषेधः सुप्येव तेन सुध्युपास्य इत्यत्र तु यणेव ।

सुखमिच्छति इति सुखशब्दात् क्यचि, सुख य इति जाते, 'क्यचि चे'ति ईकारे—सुखीय इति, तस्य सनाद्यन्तत्वेन धातुसंज्ञायां, ततः क्विपि, क्विपः सर्वापहारिलोपे, प्रत्ययलक्षणेन 'अतो लोपः' इति यकाराकारस्य लोपे, यः 'लोपो व्योर्वलि' इति लोपे, सुखी इत्येतस्य कृदन्तत्वेन प्रातिपदिकसंज्ञायां,

---

**न भूसुधियोरिति ।** भू एवं सुधी का अजादि सुप् परे होन पर यण् न हो ।

**सुधीः ।** औ आदि में 'न भूसुधियोः' से यण् का निषेध होने से इयङ् ही होता है और सुधियौ–यः–यम्–यौ–यः–या–ये–यः–यः–योः–याम्–यि–योः इत्यादि रूप होते हैं ।

यह निषेध सुप् परवर्ती होने पर ही होता है, अतः 'सुध्युपास्यः' में यण् ही होगा, क्योंकि उपास्य सुप् नहीं है ।

सुख चाहने वाला सुखीः । ( सुख से क्यच्, अ का ईकार, सुखीय को धातुसंज्ञा, उससे क्विप्, क्विप् का सर्वापहारी लोप एवं अकार तथा यकार का लोप होने पर यह कृदन्त शब्द हुआ । ) सु में—सुखीः । औ आदि अजादि में यण्

सुबुत्पत्तौ सौ—सुखीः इति। औपरे 'एरनेकाच०' इति यणि—सुख्यौ इति। एवं सर्वत्र यणेव। तेन सुख्यः–ख्यं–ख्यौ–ख्यः–ख्या–ख्ये–ख्युः–ख्युः–ख्योः–ख्यां–ख्यि–ख्योः इत्यादिरूपाणि। ङसिङसोः परतः 'ख्यत्यात्परस्ये'त्युत्वम्।

एवं सुतमिच्छतीति सुतीः। सुत्यौ–त्यः–त्यं–त्यौ–त्यः–त्या–त्ये–त्युः–त्युः–त्योः–त्यां–त्यि–त्योः इत्यादिरूपाणि। ङसिङस्वर्जमन्यत्र प्रधीवत्।

**शम्भुरित्युकारान्तः** शब्दः। तस्य घिसंज्ञकत्वाद्धरिशब्दवद्रूपाणि भवन्ति। यथा सौ—शम्भुः। औपरे पूर्वसवर्णदीर्घे—शम्भू। जसि 'जसि चे'ति गुणेऽवादेशे—शम्भवः। अमि पूर्वरूपे—शम्भुम्। औटि पूर्वसवर्णदीर्घे—शम्भू। शसि पूर्वसवर्णदीर्घे, सस्य नत्वे—शम्भून्। टापरे घिसंज्ञायां, नाभावे—शम्भुना। ङयि घिसंज्ञायां, गुणेऽवादेशे—शम्भवे। ङसिङसोः घित्वेन गुणे, पूर्वरूपे—शम्भोः। ओसि यणि—शम्भ्वोः। आमि नुटि 'नामी'ति दीर्घे—शम्भूनाम्। ङौ उकारपरत्वेन ङेरौत्त्वे घित्वेन अकारान्तादेशे च—शम्भौ। सम्बोधने सौ 'ह्रस्वस्य गुणः' इति गुणे, एङ्परत्वेन हल्लोपे—हे शम्भो! इत्यादि।

---

होकर प्रधी के जैसे रूप चलते हैं। जैसे—सुख्यौ–ख्यः–ख्यं–ख्यौ–ख्यः–ख्या–ख्ये–ख्युः–ख्युः–ख्योः–ख्याम्–ख्यि इत्यादि। ङसि एवं ङस् में 'ख्यत्यात्परस्य' से उत्त्व होता है। इसी तरह सुत को चाहने वाला सुतीः–त्यौ–त्यः–त्यं–त्यौ–त्यः–त्या–त्ये–त्युः–त्युः–त्योः–त्याम्–त्यि इत्यादि। ङसि-ङस् में 'ख्यत्यात्परस्य' से उत्व होता है। सुखी एवं सुती के ङसि एवं ङस् को छोड़कर अन्य विभक्तियों में प्रधी की तरह रूप बनते हैं।

शम्भु शब्द के रूप हरि शब्द के जैसे ही बनते हैं। उसको भी घिसंज्ञा होती है। इस कारण सु में—शम्भुः। औ में पूर्वसवर्णदीर्घ से—शम्भू। जस् में 'जसि च' से गुण एवं अवादेश से—शम्भवः। अम् में पूर्वरूप होने से—शम्भुम्। औट् में पूर्वसवर्णदीर्घ से—शम्भू। शस् में पूर्वसवर्णदीर्घ एवं नत्व से—शम्भून्। टा में घिसंज्ञा होने से नाभाव से—शम्भुना। ङे में घिसंज्ञक होने से गुण एवं अवादेश से—शम्भवे। ङसि एवं ङस् में गुण एवं पूर्वरूप होने पर—शम्भोः २। ओस् में यण् होने से—शम्भ्वोः। आम् में नुट् एवं दीर्घ होने से—शम्भूनाम्। ङि में ङि का औ एवं घिसंज्ञक होने से उकार का अकार होकर वृद्धि होने से—शम्भौ। सम्बोधन में 'ह्रस्वस्य गुणः' से गुण होकर एङ् पर होने के कारण स् के लोप से—हे शम्भो।

**( १७४ ) तृज्वत्क्रोष्टुः ७।१।९५ ।। क्रोष्टुशब्दस्तृजन्तवद्भवति असम्बुद्धौ सर्वनामस्थाने परे। क्रोष्टुशब्दस्य स्थाने क्रोष्टृशब्दः प्रयोक्तव्य इत्यर्थः।**

**( १७५ ) ऋतो ङिसर्वनामस्थानयोः ७।३।११० ।। ङौ सर्वनामस्थाने च परे ऋदन्ताङ्गस्य गुणः स्यात्। इति प्राप्ते।**

**( १७६ ) ऋदुशनस्पुरुदंसोऽनेहसाञ्च ७।१।९४ ।। ऋदन्तानामुशनसादीनाञ्चानङ् स्यादसम्बुद्धौ सौ।**

---

एवं भानुप्रभृतयः उकारान्तघिसंज्ञकशब्दाः। यथा—भानुः-नू-नवः-नुम्-नू-नून्-नुना-नवे-नोः-नोः-न्वोः-नूनाम्-नौ-न्वोः-नुषु इत्यादि।

**तृज्वत्क्रोष्टुरिति**। द्विपदमिदं सूत्रम्। सर्वनामस्थाने असम्बुद्धौ इत्यनुवर्तते। **क्रोष्टुशब्द इति**। क्रोष्टुशब्दः। तृजन्तवत् = तृच् अन्ते यस्य तद्वत्। भवति। असम्बुद्धौ = सम्बुद्धिभिन्ने। सर्वनामस्थाने = स्वादिपञ्चके परे। क्रोष्टुशब्दस्य स्थाने क्रोष्टृशब्दः = तृजन्तरूपः प्रयोक्तव्य इति। कोष्टुशब्दोऽसम्बुद्धौ सर्वनामस्थाने परे कोष्टृरूपं भजते इति।

**ऋतो ङिसर्वनामस्थानयोरिति**। द्विपदमिदं सूत्रम्। गुण इत्यनुवर्तते। ङिसर्वनामस्थानयोः=ङिश्च सर्वनामस्थानञ्च तयोः। **ङौ इति**। ङौ=ङिविभक्तौ परे। सर्वनामस्थाने = तत्संज्ञकत्वादिपञ्चके। परे। ऋदन्ताङ्गस्य = ऋत् अन्ते यस्य तादृशं यदङ्गं तस्य। गुणः। स्यादिति। इति = इत्यनेन। प्राप्ते = गुणे प्राप्ते।

**ऋदुशनस्पुरुदंसोऽनेहसाञ्चेति**। अनङ् इति असम्बुद्धौ सौ इति चानुवर्तते। **ऋदुशनस्पुरुदंसोऽनेहसामिति**। ऋत् = तदन्तविधिना ऋकारान्तः च उशनस् च पुरुदंसस् च अनेहस् च तेषाम्। **ऋदन्तानामिति**। ऋदन्तानां = ऋत् अन्ते यस्य

---

इसी तरह भानु आदि शब्दों के भी रूप बनते हैं। जैसे—भानुः-नू-नवः-नुम्-नू-नून्-नुना-नवे-नोः-नोः-न्वोः-नूनाम्-नौ इत्यादि।

**तृज्वत्क्रोष्टुरिति**। क्रोष्टु शब्द तृजन्त जैसा हो सम्बुद्धिभिन्न सर्वनाम परे रहने से। क्रोष्टु शब्द के स्थान में क्रोष्टृशब्द का प्रयोग करना चाहिए।

**ऋतो ङिसर्वनामस्थानयोरिति**। ङि एवं सर्वनामस्थान के परे रहने पर ऋकारान्त अङ्ग का गुण हो। इससे गुण प्राप्त होने पर—

**ऋदुशनस्पुरुदंसोऽनेहसाञ्चेति**। ऋदन्त, उशनस्, पुरुदंसस्, अनेहस्—इनका अनङ् आदेश हो सम्बुद्धिभिन्न सु परे रहने से।

**( १७७ ) अप्तृन्तृच्स्वसृनप्तृनेष्टृत्वष्टृक्षत्तृहोतृपोतृप्रशास्तॄणाम् ६।४।११ ।। अबादीनामुपधाया दीर्घः स्यादसम्बुद्धौ सर्वनामस्थाने । क्रोष्टा । क्रोष्टारौ । क्रोष्टारः । क्रोष्टारम् । क्रोष्टॄन् ।**

---

तेषाम् । उशनसादीनाम् = उशनस् आदिर्येषां तेषाम्—उशनस्-पुरुदंसस्-अनेहस्शब्दानाम् । च । अनङ् । असम्बुद्धौ = सम्बुद्धिभिन्ने । सौ । परे = परतः स्थिते । ङित्त्वात् 'ङिच्चे'ति अन्तादेशः ।

**अप्तृन्तृच्स्वसृनप्तृनेष्टृत्वष्टृक्षत्तृहोतृपोतृप्रशास्तॄणामिति ।** उपधाया इति दीर्घ इति असम्बुद्धौ इति सर्वनामस्थाने इति चानुवर्तते । अबादीनां = अप् आदिर्येषान्तेषां अप् तृन्-तृच्प्रत्ययौ तेन तदन्तौ । केवलयोस्तयोः प्रयोगानर्हत्वात् स्वसृ नप्तृ नेष्टृ त्वष्टृ क्षत्तृ होतृ पोतृ प्रशास्तृ इत्येतेषाम् । उपधायाः । दीर्घः । असम्बुद्धौ । सर्वनामस्थाने । तृन्तृजन्ता औणादिकाः । तेन तृजन्तादेव सिद्धे नप्त्रादीनां ग्रहणमौणादिकेषु नप्त्रादिसप्तानामेव दीर्घं इति नियमार्थम् । उद्गातृ-शब्दस्यापि भवति । तेन पितृ-मातृ-भ्रात्रादीनां नेति विवेकः ।

**क्रोष्टा**—क्रोष्टुशब्दात् प्रातिपदिकसंज्ञायां सौ, अनुबन्धलोपे, सोः सम्बुद्धि-भिन्नसर्वनामस्थानत्वेन तत्परे 'तृज्वत्क्रोष्टुरि'ति तृज्वद्भावे, क्रोष्टृ स् इति जाते, ऋकारस्य 'ऋतो ङिसर्वनामस्थानयोरि'ति गुणे प्राप्ते, तं प्रबाध्य 'ऋदुशनसि'ति ऋतोऽनङादेशे, तस्य अनेकाल्त्वेऽपि ङित्त्वेन अन्तादेशे, अनुबन्धलोपे, क्रोष्टन् स् इति जाते, टकाराकारस्योपधासंज्ञायां, तस्य 'अप्तृनि'ति दीर्घे,

---

**अप्तृन्तृच् इत्यादि ।** अप् आदि अर्थात् अप् शब्द, तृन् एवं तृच् प्रत्ययान्त शब्द ( औणादिक तृजन्तों में ), स्वसृ, नप्तृ, नेष्टृ, त्वष्टृ, क्षत्तृ, होतृ, पोतृ, प्रशास्तृ—इनके उपधा का दीर्घ हो, सम्बुद्धिभिन्न सर्वनामस्थान परे रहने से ।

**क्रोष्टा**—क्रोष्टु शब्द से सु के आने से क्रोष्टुस्, सु के सर्वनामस्थान होने से 'तृज्वत्क्रोष्टुः' से तृज्वद्भाव होने से क्रोष्टृस्, 'ऋतो ङिसर्वनामस्थानयोः' से प्राप्त गुण को बाधकर 'ऋदुशनस्०' से ङित् होने से अनङ् अन्तादेश एवं अनुबन्धलोप होने पर क्रोष्टनस्, अन् के अकार की उपधासंज्ञा होकर 'अप्-तृन्तृच्०' सूत्र से उपधा का दीर्घ होने पर क्रोष्टान् स्, स् को अपृक्तसंज्ञा होने पर हल् पर होने से हल्ङ्यादि लोप एवं नकार का प्रातिपदिकान्त लोप होने पर क्रोष्टा हो गया । औ में तृज्वद्भाव एवं 'ऋतो ङिसर्वनामस्थानयोः' से गुण होने एवं रपर होने से क्रोष्टार् औ, 'अप्तृन्तृच्०' सूत्र से उपधादीर्घ होनेसे

( १७८ ) विभाषा तृतीयादिष्वचि ७।१।९७ ।। **अजादिषु तृतीयादिषु क्रोष्टुर्वा तृज्वत् । क्रोष्ट्रा । क्रोष्ट्रे ।**

---

क्रोष्टान्स्, सः अपृक्तसंज्ञायां, तस्य हल्परत्वेन हल्ङ्यादिना लोपे, नः प्रातिपदिकान्तलोपे—क्रोष्टा इति ।

औविभक्तौ, क्रोष्टु औ इति जाते, 'तृज्वत्क्रोष्टुरि'ति तृज्वद्भावे—क्रोष्टृ औ, 'ऋतो ङि०' इति ऋकारस्य गुणे, रपरत्वे—क्रोष्टर् औ, टगताकारस्योपधासंज्ञायाम् 'अप्तृन्तृजि'ति दीर्घे—क्रोष्टारौ इति । एवं जसि तृज्वद्भावे, गुणे उपधादीर्घे च—क्रोष्टारः इति । अमि तृज्वद्भावे, गुणे, उपधादीर्घे—क्रोष्टारम् इति । औटि—क्रोष्टारौ । शसि, तस्य सर्वनामस्थानत्वाभावेन तृज्वद्भावाभावे पूर्वसवर्णदीर्घे, सस्य नत्वे—क्रोष्टून् इति ।

**विभाषा तृतीयादिष्वचि इति ।** विभाषा तृतीयादिषु अचि त्रिपदमिदं सूत्रम् । 'तृज्वत् क्रोष्टुः' इत्यनुवर्तते । **अजादिष्विति ।** अजादिषु=अच् आदौ येषान्तासु । तृतीयादिषु=तृतीया आदिर्येषान्तासु तृतीयाप्रभृतिषु विभक्तिषु । क्रोष्टुः=क्रोष्टुशब्दस्य । वा=विकल्पेन । तृज्वत्=तृज्वद्भावः ।

**क्रोष्ट्रा**—क्रोष्टुशब्दात् टाविभक्तौ, कोष्टु आ इति जाते, 'विभाषा तृतीयादिष्वचि' इति तृज्वद्भावे—क्रोष्टृ आ, यणि—क्रोष्ट्रा इति । पक्षे घिसंज्ञायां, नाभावे—क्रोष्टुना इति । ङेविभक्तौ, तृज्वद्भावे, यणि—क्रोष्ट्रे इति । पक्षे घित्वेन गुणेऽवादेशे क्रोष्टवे ।

---

पर क्रोष्टारौ हो गया । जस् में तृज्वद्भाव, 'ऋतो ङि०' सूत्र से गुण एवं रपर होने तथा 'अप्तृन्तृच्०' सूत्र से उपधादीर्घ होने पर क्रोष्टारः हो गया । अम् में तृज्वद्भाव, गुण, उपधादीर्घ से—क्रोष्टारम् । औट् में—क्रोष्टारौ । शस् में सर्वनामस्थान न होने से तृज्वद्भाव के अभाव में पूर्वसवर्णदीर्घ एवं स् के नत्व से क्रोष्टून् हो गया ।

**विभाषा तृतीयादिष्वचीति ।** अजादि वाले तृतीयादि विभक्ति में क्रोष्टु शब्द का विकल्प से तृज्वद्भाव हो ।

'टा' में क्रोष्टु शब्द का 'विभाषा तृतीयादिष्वचि' से तृज्वद्भाव होने पर 'क्रोष्टृ आ' एवं यण् होने पर क्रोष्ट्रा हुआ । पक्ष में तृज्वद्भाव के न होने से घिसंज्ञा होकर नाभाव से क्रोष्टुना हो गया । क्रोष्टुभ्याम् । क्रोष्टुभिः । ङे में तृज्वद्भाव एवं यण् होने से—क्रोष्ट्रे । पक्ष में घिसंज्ञा होने तथा गुण होकर अवादेश होने से—क्रोष्टवे । क्रोष्टुभ्यः ।

(१८१) ओः सुपि ६।४।८३ ॥ **धात्ववयवसंयोगपूर्वो न भवति य उवर्णस्तदन्तो यो धातुस्तदन्तस्यानेकाचोऽङ्गस्य यण् स्यादजादौ सुपि । खलप्वौ । खलप्व इत्यादि । एवं सुल्वादयः । स्वभूः । स्वभुवौ । स्वयम्भूः । स्वयम्भुवौ । वर्षाभूः ।**

---

नत्वे—हुहून् । टादौ—हुह्वा-ह्वे-ह्वः-ह्वः-ह्वोः-ह्वाम्-ह्वि-ह्वयोः । सम्बुद्धौ दीर्घान्तत्वेन गुणाभावे हल्लोपाभावे च—हे हुहूः ।

खलपूशब्दः खलं पुनातीति खलोपपदपूञ्धातोः क्विपि निष्पन्नः अत एव धात्वन्तः । तेन अजादौ 'अचि श्नुधातु०'सूत्रेण उवङ् प्राप्नोति । सौ, सस्य रुत्वविसर्गयोः—खलपूः । औपरे अजादित्वाद् यणं प्रबाध्य 'अचि श्नुधातु०'-सूत्रेण उवङि प्राप्ते—

**ओः सुपीति** । द्विपदमिदं सूत्रम् । अनेकाचोऽसंयोगपूर्वस्येति यणिति चानुवर्तते । **धात्ववयवेति** । धात्ववयवसंयोगपूर्वः=धातोः अवयवः यः संयोगः पूर्वे यस्य तादृशः न भवति यः उवर्णः । तदन्तः=तादृश उवर्णः अन्ते यस्य तादृशः यः धातुः तदन्तस्य=स अन्ते यस्य तस्य । अनेकाचः=अनेकः अच् यस्य तादृशस्य । अङ्गस्य । यण् । स्यात् । अचि=अजादौ । सुपि=सुप्परे । अत्रापि गतिकारकेतरपूर्वपदस्य यण् नेष्यते ।

इति धात्ववयवसंयोगापूर्वत्वेन पूकारस्य यणि—खलप्वौ । एवं सर्वत्राजादौ यणि—खलप्वः-प्वम्-प्वौ-प्वः-प्वा-प्वे-प्वः-प्वः-प्वोः-प्वाम्-प्वि-प्वोः इत्यादि । सम्बुद्धौ—हे खलपूः ।

---

**ऋत उदिति** । ऋदन्त से ङसि एवं ङस् के अकार के परे होने से दोनों के स्थान में उकार आदेश हो । उकार रपर होता है ।

**रात्सस्येति** । रेफ से परे संयोग अन्त वाले स् का ही लोप हो, दूसरे का नहीं । इससे स् का लोप होने पर रेफ का विसर्ग ।

ङसि में तृज्वद्भाव होकर क्रोष्टृ अस्; 'ऋत उत्' से उकार एकादेश एवं रपर होने से क्रोष्टुर्स्, स् का संयोगान्त होने से 'रात्सस्य' से लोप होने एवं रेफ का विसर्ग होने से क्रोष्टुः हो गया । पक्ष में घिसंज्ञा एवं गुण तथा पूर्वरूप होने से—क्रोष्टोः । ङस् में तृज्वद्भाव, उकारादेश आदि होने से—क्रोष्टुः । पक्ष में घिसंज्ञा तथा गुण एवं पूर्वरूप से—क्रोष्टोः । ओस् में तृज्वद्भाव एवं यण् होने से—क्रोष्ट्रोः । पक्ष में यण् होने से—क्रोष्ट्रोः । आम् में पर होने से

( १८२ ) वर्षाभ्वश्च ६।४।८४ ॥ अस्योवर्णस्य यण् स्यादचि सुपि । **वर्षाभ्वौ । वर्षाभ्वः ।** दृन्भूः । ( दृन्करपुनःपूर्वस्य भुवो यण् वक्तव्यः ( वा० ) ।

---

एवं सुल्वादयः = सुलूप्रभृतिशब्दाः । सुलूशब्दस्य धात्वन्तत्वात्सर्वत्र इयङो बाधकत्वेन 'ओः सुपि' इति यणजादौ । तेन—सुलूः–ल्वौ–ल्वः–ल्वं–ल्वौ–ल्वः–ल्वा–ल्वे–ल्वः–ल्वः–ल्वोः–ल्वां–ल्वि–ल्वोः इत्यादि । सम्बुद्धौ—हे सुलूः ।

स्वभूशब्दः स्वस्माद् भवतीति स्वोपपदात् भूधातोः क्विपा निष्पन्नस्तेन धात्वन्तः । कारकपूर्वपदत्वादनेकाच्त्वेन अजादौ उवङो बाधकत्वेन 'ओः सुपी'ति प्राप्तस्य यणः 'न भूसुधियोरि'ति निषेधेन उवङ् एव । तेन—स्वभूः–स्वभुवौ–वः–वम्–वौ–वः–वा–वे–वः–वः–वोः–वाम्–वि इत्यादिरूपाणि । सम्बुद्धौ—हे स्वभूः । एवं स्वयम्भूशब्दस्यापि ।

वर्षाभूः । औपरे 'इको यणची'ति प्राप्तं यणं बाधित्वा धातुत्वेन 'अचि श्नुधातु०'सूत्रेण प्राप्तस्योवङः बाधकत्वेन 'ओः सुपी'ति प्राप्तस्य यणः 'न भूसुधियोरि'ति निषेधे—

**वर्षाभ्वश्चेति** । वर्षाभ्वः च द्विपदमिदं सूत्रम् । वर्षाभ्व इति षष्ठ्यन्तं पदम् । ओः इति यण् इति अचि सुपि इति चानुवर्तते । **अस्येति** । अस्य = वर्षाभूशब्दस्य । उवर्णस्य स्थाने । यण् । अचि = अजादौ सुपि ।

---

इसी तरह सुलू आदि के भी रूप होते हैं । सुलूः–ल्वौ–ल्वः इत्यादि । इयङ्, उवङ् एवं 'एरनेकाचः०' तथा 'ओः सुपि' सूत्र से होने वाला यण् पूर्वरूप, पूर्वसवर्णदीर्घ आदि का भी बाधक होता है । इस कारण सुल्वम्–ल्वौ–ल्वः–ल्वा इत्यादि ।

स्वभूः । औ में उवङ् के बाधक के रूप में 'ओः सुपि' से प्राप्त यण् का 'न भूसुधियोः' से निषेध होने के कारण पुनः उवङ् होने से स्वभुवौ हो गया । इसी तरह सर्वत्र अजादि में उवङ् होकर स्वभुवः–वं–वौ–वः–वा–वे–वः–वः–वोः–वां–वि इत्यादि रूप चलते हैं ।

स्वयम्भूः । सर्वत्र स्वभू की तरह ।

वर्षाभूः । औ में उवङ् के बाधक के रूप में 'ओः सुपि' से प्राप्त यण् का 'न भूसुधियोः' से निषेध होने पर उवङ् की ही प्राप्ति होने से उसको बाधकर—

**वर्षाभ्वश्चेति** । इसके उवर्ण का यण् हो अजादि सुप् परे रहने से ।

इससे यण् होने पर वर्षाभ्वौ हो गया । इसी तरह सर्वत्र अजादि में यण् होकर वर्षाभ्वः–भ्वं–भ्वौ–भ्वः–भ्वा–भ्वे–भ्वः–भ्वः–भ्वोः–भ्वाम्–भ्वि इत्यादि ।

दृन्भ्वम् । करभ्वम् । पुनर्भ्वम् । धाता । धातारौ । धातारः । हे धातः । ऋवर्णान्नस्य णत्वं वाच्यम् (वा० ) । धातॄणाम् । एवं नप्त्रादयः । नप्त्रादिग्रहणं व्युत्पत्तिपक्षे नियमार्थम् । तेनेह न—पिता । पितरौ । पितरः । पितरम् । पितरः । शेषं धातृवत् । एवं जामात्रादयः । ना । नरौ ।

---

इति यणि, वकारे—वर्षाभ्वौ इति । एवं सर्वत्राजादौ यणेव । तेन वर्षाभूः-भ्वं-भ्वौ-भ्वः-भ्वा-भ्वे-भ्वः-भ्वः-भ्वोः-भ्यां-भ्वि इत्यादिरूपाणि । सम्बुद्धौ हे वर्षाभूः ।

**दृन्करपुनःपूर्वस्य भुवो यण् वक्तव्यः** ( वा० ) । दृन् च करश्च पुनश्च पूर्वे यस्य तादृशस्य । भुवः=भू इत्येतस्य । यण् वक्तव्य इति ।

दृन्भूः दृन्भ्वौ दृन्भ्वः-भ्वं-भ्वौ-भ्वः इत्यादि । करभूः-भ्वौ-भ्वः-भ्वं-भ्वौ-भ्वः इति । कारभूः-भ्वौ-भ्वः इत्यादि । पुनर्भूः-र्भ्वौ-र्भ्वः इत्यादि ।

**धाता**—धातृशब्दात्सौपरे सोरनुबन्धलोपे, धातृस् इति जाते, सोः सर्वनामस्थानसंज्ञायाम्, 'ऋतो ङिसर्वनामस्थानयोरि'ति गुणे प्राप्ते, तस्य बाधकत्वेन 'ऋदुशनस्पुरुदंसोऽनेहसाञ्चे'ति ऋकारस्य स्थानेऽनङि, अनुबन्धलोपे, धातन् स् इति जाते, अनोऽकारस्योपधासंज्ञायाम् 'अप्तृन्तृच्०' इति दीर्घे, सः अपृक्तसंज्ञायां, हल्परत्वेन लोपे, नः प्रातिपदिकान्तलोपे—धाता इति । औपरे तस्य सर्वनामस्थानसंज्ञायाम्, 'ऋतो ङि०' इति गुणे, रपरत्वे, धातर् औ इति जाते; 'अप्तृन्तृच्०' इत्युपधादीर्घे—धातारौ इति । जसि 'ऋतो ङि०' इति गुणे, रपरत्वे 'अप्तृन्तृचि'ति उपधादीर्घे—धातारः इति । अमि गुणे, रपरत्वे, उपधादीर्घे—धातारम् इति । औटि गुणे, रपरत्वे, उपधादीर्घे—धातारौ इति । शसि सर्वनामस्थानाभावेन गुणाभावे, पूर्वसवर्णदीर्घे, सस्य नत्वे, नस्य णत्वे प्राप्ते

---

**दृन्करपुन इति** । पूर्व में होने वाले भू का भी यण् हो । दृन्भूः दृन्भ्वौ । करभूः करभ्वौ । पुनर्भूः पुनर्भ्वौ ।

**धाता**—धातृ शब्द से सु के आने एवं उसके सर्वनामस्थान संज्ञा होने से 'ऋतो ङि०' से प्राप्त गुण को बाधकर 'ऋदुसनस्०' सूत्र से अनङ्, अनुबन्धलोप, उसके ङित् होने से ऋ के स्थान में अवस्थान से धातन् स्, उपधा का 'अप्तृन्तृच्०' से दीर्घ एवं स् तथा न् का लोप होने पर धाता हो गया । औ में गुण, रपर एवं उपधादीर्घ से—धातारौ-रः-रम्-रौ । शस् में सर्वनामस्थान के अभाव में गुण न होने से पूर्वसवर्णदीर्घ एवं स् के न् से धातॄन् हो गया । टा—धात्रा । ङे—धात्रे । ङसि-ङस् में 'ऋत उत्' से उकार एकादेश होने पर

'पदान्तस्ये'ति निषेधे—धातॄन् इति। टापरे यणि—धात्रा। ङेपरे यणि—धात्रे। ङसिङसोः 'ऋत उत्' इति उदेकादेशे, 'रात्सस्ये'ति स्लोपे, रेफस्य विसर्गे—धातुः २ इति। ओसि यणि—धात्रोः। आमि नुटि, 'नामि' इति दीर्घे—

**ऋवर्णान्नस्य णत्वं वाच्यम्** (वा०)। ऋवर्णात् परस्य नस्य नकारस्य णत्वं स्यात्।

इति णत्वे—धातॄणाम् इति। ङौ 'ऋतो ङि०' इति गुणे, रपरत्वे-धातरि। ओसि यणि—धात्रोः। सम्बोधने सौ, तस्य 'एकवचनं सम्बुद्धिरि'ति सम्बुद्धिसंज्ञायां, सम्बुद्धिलोपे प्राप्ते, ततः परत्वेन 'ऋतो ङि०' इति गुणे, धातस् इति जाते; 'रात्सस्ये'ति स्लोपे, रेफस्य विसर्गे—धातः इति।

एवं नप्त्रादयः=नप्तृनेष्टृत्वष्टृक्षत्तृपोत्तृहोतृप्रशास्तृ-उद्गातृशब्दानां रूपाणि भवन्ति। यथा नप्ता-नप्तारौ-रः-रं-रौ-प्तॄन्-प्त्रा-प्त्रे-प्तुः २-प्त्रोः-प्तॄणां-प्तरि। हे नप्तः।

क्षत्ता-रौ-रः-रं-रौ-तॄन्-त्रा-त्रे-तुः २-त्रोः-तॄणां-तरि-त्रोः। हे क्षत्तः। होता-रौ-रः इत्यादि।

**नप्त्रादीति।** नप्त्रादिग्रहणं=अप्तृन्तृजादिसूत्रे तृन्तृज्ग्रहणेनैव सिद्धे पुनः नप्त्रादिशब्दानां ग्रहणम्। व्युत्पत्तिपक्षे=शब्दा व्युत्पन्ना इति पक्षे। नियमार्थम्=औणादिकेषु तृन्तृजन्तेषु नप्त्रादिसप्तानामेव दीर्घं इति नान्येषां भ्रातृजामातृमातृपितृदुहितॄणामिति नियमार्थम्। अव्युत्पत्तिपक्षे तु नप्त्रादीनां तृन्तृजन्तत्वाभावादप्राप्तौ नप्त्रादीनां स्यादेव तदितरेषां नेति सूचनायेति। तेन इह=पित्रादिशब्दे। न=न दीर्घः।

---

स्लोप एवं रेफ के विसर्ग से धातुः हो गया। ओस् में—धात्रोः। आम् में नुट्, दीर्घ—

**ऋवर्णान्नस्य णत्वं वाच्यम्** ( वा० )। ऋवर्ण से परे न का णत्व हो।

इससे णत्व होकर धातॄणाम् हो गया। ङि में 'ऋतो ङि०' से गुण होने से—धातरि इत्यादि। सम्बोधन सु में 'ऋतो ङि०' से गुण एवं रपर तथा 'रात्सस्य' से स्लोप होने एवं रेफ के विसर्ग से हे धातः हो गया।

इसी तरह नप्तृ आदि शब्दों के रूप होते हैं। जैसे—नप्ता-नप्तारौ-रः-रम्-रौ- नप्तॄन्। नप्त्रा-प्त्रे-प्तुः २- प्त्रोः-प्तॄणां-प्तरि। हे नप्तः। इत्यादि।

अप्तृन्तृच्०' सूत्र में नप्त्रादि का ग्रहण औणादिक तृनन्त एवं तृजन्त में